॥ श्रीः ॥

# संकर्ष-काण्डम् ।

## जैमिनीयषोडशाध्याय्याः शेषचतुरध्यायीस्वरूपम् ।

मीमांसापारदृश्वबुधवरश्रीभास्करभट्टप्रणीतभाट्टचन्द्रिकोपेतम् ।

सत्संप्रदायाचार्य पं. स्वामिश्रीराममिश्रशास्त्रि संकलितटिप्पणीसमेतम् ।

# SAMKARSHA KANDA

OR

THE LAST FOUR CHAPTERS OF JAIMINI,

WITH THE COMMENTARY CALLED BHAṬṬA CHANDRIKÁ,

OF BHÁSKARA,

EDITED WITH NOTES

BY

PANDIT SWA'MI' RA'MA MIS'RA S'A'STRI'.

काश्याम् ।

मेडिकल्-हाल्-नामकमुद्रालये मुद्रयित्वा प्रकाशितः ।

१९५० वैक्रमाब्दे । १८९४ ईस्वी ।

॥ श्रीः ॥

श्रियै नमः ।

श्रीपतये नमः ।

श्रीमते रामानुजाय नमः ।

# संकर्ष–काण्डभूमिका ।

अनादिनिधनाविच्छिन्नविविधरचनाप्रपञ्चे सुमेधसामपि परमाश्चर्यङ्करे अनर्वागदृशामप्यवाङ्मनसगोचरे घटीयन्त्रवदनिशमावर्तमाने जगदुदयविभवलयलीले संसारचक्रे बम्भ्रमति कर्मपरवशान् भ्राम्यतोजन्तूनालोच्य करुणावरुणालयो जगदीश्वरस्तान् बन्धादुन्मोचयितुकामो देहेन्द्रियमनःप्राणैरतिपटीयसा ज्ञानेन्द्रियग्रामेण चायूयुजत् ।उपदिदेश च कालान्तरीणदेशान्तरीणविप्रकृष्टासंनिकृष्टातीन्द्रियसृष्टिप्रलयादिलक्षणपरमदुरूहार्थसार्थविज्ञानजननक्षमं शास्त्रमृग्वेदादिलक्षणं, तद्धि परस्य ब्रह्मणो जननीये जगज्जाते द्यावापृथिव्याविव सूर्याचन्द्रमसाविव देवासुरसङ्घाविव स्त्रीपुंसाविव 'पुण्यपाप्मनी इव च निविष्टमपि नियतानुपूर्वीकमिति नित्यमित्याचक्षते नित्यानित्यविवेकविपश्चितोविचक्षणाः । न च तावतापि तदपरिणाममनाद्यन्तस्वभावमात्मस्वरूपमिवानधिगतसर्वविक्रियं, प्रतिकल्पं सृज्यमानप्राणिकर्मसहानुगेन जगन्नियन्त्रा परमेश्वरेणैव आहितनिजशक्तिभिःपूर्वकल्पे तपःसमृद्धिसमाराधितपरमपूरुषैरतीन्द्रियार्थनिरीक्षणनिपुणैः परमर्षिभिस्तस्याखिलस्य श्रुतिपदव्यपदेश्यसन्दर्भस्य स्मर्यमाणत्वात् । न च ते सर्वे वेदा युगपदुद्बभुर्विलिल्यिरे वा किन्तु कदाचित्काचिच्छाखा उत्ससाद प्रादुर्बभूव चापरा, यथा इदानीमिव कठकपिष्ठलादिशाखा उत्सन्नप्राया अध्येतृविरहाद्ग्रन्थविलोपाच्च ।

एवं सहस्रशाखे सामनि काश्चिदेव शाखा लब्धप्रचारा अपराश्च समूलमुन्मूलिता: कालमहिम्ना । प्रचचार चाचिरादेव कालाद् वाजसनेयि-शाखा सब्राह्मणमन्त्रिका, । भगवन्तं भास्करमाराध्य याज्ञवल्क्यो महर्षिस्तां लेभे इति हि पुराणेतिहासाचार्या: । न च तावता अचिरप्रवृत्ता सा शाखा न वेदो, नापि कृत्रिमेत्यनित्या, तस्या: सुचिरकालप्रवृत्तानामाश्वलायनादिशाखानामिव विधूतकल्मषैर्जातिस्मरैराधिकारिकै: परमर्षिभि: स्मर्यमाणत्वाविशेषादविशेषाच्चानुपूर्वीनित्यताया: । यथोक्तं द्वादशस्कन्धे श्रीमद्भागवते-याज्ञवल्क्यस्ततो ब्रह्मन् । छन्दांस्यधिगवेषयन् । गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥ याज्ञवल्क्य उवाच-ओं नमो भगवते आदित्यायेत्यारभ्य -यातयाम यजु:काम उपसरामीति, सूत उवाच-एवं स्तुत: स भगवान् वाजिरूपधरो हरि: । यजूंष्ययातयामानि मुनयेऽदात्प्रसादत: ॥ यजुर्भिरकरोच्छाखा दश पञ्च तथा विभु: । जगृहुर्वाजसन्यस्ता: काण्वमाध्यन्दिनादय: ॥ इत्यादिना, इदमेव तु वेदानां नित्यत्वे परमं प्रमाणं यद् याज्ञवल्क्यसमानसमया ऋषयस्तत्प्रणीतासु स्मृतिषु पौरुषेयवाक्यतां प्रतिपन्ना: । प्रतिपेदिरे च तद्दृष्टेष्वेव मन्त्रब्राह्मणभागेषु अपौरुषेयवेदस्वरूपतां, अस्ति ह्येष प्रकृतिकृतोनियम:-प्रायेजना: समानसमयम्परमोत्कृष्टं महात्मानमपि लघयितुमिच्छन्ति तदीयास्वाश्चर्यशक्तिषु स्वयं विश्वासभाजोऽपि च पुनरीर्ष्यया तथा प्रयतन्ते यथेतरे जनास्तं बहुमानविश्वासभाजनं न जानीयुस्तथा च यदि याज्ञवल्क्यप्रणीतासु स्मृतिषु तत्प्रोक्तेषु मन्त्रब्राह्मणेषु च तात्कालिकानां पौरुषेयग्रन्थान्तरै: समताग्रहो मन्त्रब्राह्मणेषु वा पौरुषेयत्वाग्रह: कथमिवाभविष्यदथाभ्यधास्यँस्तेऽवश्यं तेषां समतामवेदरूपतां च, ते च तेषाम विप्रतिपद्य वेदरूपतामातस्थिरे, तदवश्यमचिरप्रवृत्ता अपि वाजसने-

यिशाखा चिरप्रवृत्तशाखान्तराणामिव वेद इति *वेदावेदविभागत-त्वज्ञाः ॥

अत एव तु छन्दोब्राह्मणानि च तद्विषयाणि ॥ ४ । २ । ६६ । इति सूत्रे अन्यत्राभिधेयस्यानित्यत्वाच्छन्दोब्राह्मणानां ताद्वि-षयवचनमिति वार्त्तिककारः, व्याकरणभाष्यकारोऽपि च तत्र तत्र वेदावेदविभागं तथैवातस्थे। अत एव। पुराणप्रोक्तेषु ब्राह्मणकल्पेषु॥ ४ । ३ । १०५ । इति सूत्रे "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु याज्ञवल्क्या-दिभ्यः प्रतिषेधस्तुल्यकालत्वादिति वार्त्तिकं, पुराणप्रोक्तेषु ब्राह्मणक-ल्पेष्वित्यत्र याज्ञवल्क्यादिभ्यः प्रतिप्रतिषेधो वक्तव्यः । याज्ञवल्का-नि ब्राह्मणानि । सौलभानीति । किं कारणम् । तुल्यकालत्वात् ।

एतान्यपि तुल्यकालानीति" । इति वदन्तौ भाष्यवार्त्तिक-कारौ अचिरप्रवृत्तेषु ब्राह्मणेष्वपि वेदत्वमन्वमंसातामित्यतिस्फुट-मेव । पाणिनिरपि च पुराणप्रोक्तेष्विति वदन् चिराचिरप्रवृत्तत्वलक्षणं ब्राह्मणे विशेषमङ्गीकुर्वाणोऽपि याज्ञवल्क्यप्रोक्तेषु ब्राह्मणेषु ताण्डि-भाल्लविशाट्यायन्यैतरेयिणामिव नाचिरप्रवृत्ततां मेने इति वार्त्ति-ककारेण तस्याचिरप्रवृत्तत्वबोधनपुरस्सरमयथाभावोऽभिहितः । केचित्तु व्याकरणप्रणेतृमुनित्रयस्यापि याज्ञवल्क्यप्रोक्तेषु ब्राह्मणेष्व-चिरप्रवृत्तत्वमनुमतं, यतः सूत्रकारोऽपि पुराणप्रोक्तेष्विति ब्रूते तत-श्चाचिरप्रवृत्तब्राह्मणव्यावृत्त्यर्थमेव पुराणपदमिति,एवमेव काशिका-पदमञ्जर्यां हरदत्तोऽपि याज्ञवल्क्यादयो ह्यचिरकालप्रवृत्ता इत्या-ख्यानेषु वार्तेति वदन् सूत्रकारस्यैव पुराणपदमुपाददानस्य याज्ञ-वल्क्यप्रोक्तानि ब्राह्मणानि स्वल्पकालप्रादुर्भूतानि अत एव न सञ्जि-घृक्षितानीति मेने । भवतु किमप्येतत्सर्वथाऽपि तु वेदावेदविभा-गोऽयमाजानिकसम्प्रदायसिद्धो वेदनित्यताविद्विषामपि दुरपह्नवस्तथा

हि सर्वज्ञकल्पास्तथागतप्रभृतयः केनापि कारणेन वेदनित्यतापक्षं समूलमुन्मूलयितुमिच्छन्तोऽपि अहमहमिकया तदुपक्रम्य अनेकनिबन्धान्निबध्नन्तोऽपि च न पारयाम्बभूवुस्तेषामिदम्प्रथमताबोधने वा पुरुषविशेषाभिप्रायप्रभवत्वबोधने वा, न चाद्यत्वेऽपि यत्नसहस्रमवलम्ब्यापि शेकुः केचन कालविशेषं पुरुषविशेषं वा निर्देष्टुं येनामुना पुरुषेणायं वेदोऽमुष्मिन् काले प्रणीत इति प्रामाणिकानां श्रद्धेयं स्यात् ।

प्रादुर्भावस्त्वस्माकमप्यनुमतो न हन्तुमीष्टे लेशतोऽपि विवक्षितां वेदनित्यतां, तथा हि स्मरन्ति—"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवेति", न हि प्रादुर्भावसमये विद्यमानाः परमर्षयस्तन्नित्यतां संशिश्यिरे, । न चर्षीणां सर्वेषामनाश्वास्यतां प्रथयन् कश्चिदाश्वसनीयः, न हि सर्वं लोकमनाश्वास्यज्ञानानोऽभिदधानो वा प्रेक्षावतामपेक्षणीयवचा वा स्याद् व्यवहाराय वा पर्याप्नुयादिति वेदनित्यतापक्षमाक्षिपताऽपि परमर्षिभिः संसस्मरिरे वेदा इत्यगत्याऽङ्गीकरणीयमापन्नं, न चेतोऽन्यद्वेदनित्यतावादिनोऽप्यभिमतं नित्यत्वं, यत्प्रतिसर्गं समानानुपूर्वीकतया तपःसम्पत्समृद्धैर्वृद्धैः परमर्षिभिः स्मर्यमाणत्वं, तच्चेदं परोऽप्यङ्गीकरोतीति चिरप्रवृत्तशाखास्विवाचिरप्रवृत्तास्वपि शाखासु समानो वेदत्वव्यवहार इति सिद्धान्तसिद्धम् ॥

तत्रैव श्रुत्याम्नायत्रयीवेदादिपदव्यपदेश्यो ऽपौरुषेयाक्षरराशिरवान्तरानेकभिदाप्रविभिन्नोऽपि प्रथमतो मन्त्रब्राह्मणभेदभिन्नस्तत्त्यानामेव च क्रियापराणामनिर्णीतार्थवाक्यानां निर्णयाय प्रवृत्तेयं षोडशाध्यायी पूर्वमीमांसा ॥

तत्र द्वादशाध्यायी बहुभिर्बहुधा च व्याख्यातेति द्वादशाध्यायीपदव्यपदेशमुपयाता पूर्वमीमांसा । वस्तुतस्तु अस्त्येषा षोडशाध्यायी तत्रोत्तरां चतुरध्यायीं संकर्षकाण्डपदेन व्यवहरन्ति । इयं च सङ्कीर्णार्थनिरूपणपरेति संकर्षण-पदेन संकर्ष-पदेन चोच्यते इति द्वादशाध्यायीभूमिकायां समगरिष्महि । अस्याश्च पूर्वमीमांसाया आद्यं व्याख्यानमुपवर्षमहर्षिप्रणीता वृत्तिर्यामसकृदेव भाष्यकाराः शबरस्वामिन उट्टङ्कितवन्तः । आधुनिकेष्वपि च शास्त्रदीपिकादिग्रन्थेषु अस्ति तदुल्लेखः । सा च वृत्तिर्मूले प्रचुरप्रचारे अनेकविकल्पास्पदतां चोपगते प्रणीतेति तु लोकव्यवहारसिद्धं कालमहिम्ना वृत्तावप्यनानुकूल्यमुपयातायां तामुत्साद्य नानाविधानि व्याख्यानानि प्रववृतिरे । आरेभिरे चाचार्या वेदवाह्यबौद्धादिमतभीत्या तत्संमिश्रानिव निरीश्वरवाद-मन्त्रमयदेवतावाद-पाठैकफलोपनिषद्वादान् व्यवस्थापयितुम् ।

उपलब्धेषु पूर्वमीमांसाग्रन्थेषु शाबरभाष्यं प्राचीनतमं मान्यतमं च, शङ्कराचार्या अपि तत्रतत्रसूत्रभाष्यादिषु प्रसङ्गतः शबरस्वामिन उद्दिश्य-यथाहुः शास्त्रतात्पर्यविदः,-यथा च शास्त्रतात्पर्यविदामुपक्रमणमिति सबहुमानं निर्दिशन्तिस्म । कुमारिलवार्त्तिकमपि सुप्रसिद्धं, तच्च श्लोकवार्त्तिकं, वा*र्त्तिकं, टुप्टीकापदेन चो-

* प्रथमपादे श्लोकवार्त्तिकं, ततो निवीतान्तं वार्त्तिकमिति तदनन्तरं तु टुप्टीकेत्याचक्षते टुप्शब्दः कस्या भाषायाः कश्च तस्यार्थ इति विशिष्य न ज्ञायते प्रायोजनाः-टुप्टीकापदेन संक्षिप्ताक्षरव्याख्यानं मन्यन्ते तदेतत्कुत इति विज्ञाः स्वतो विदाङ्कुर्वन्तु । अहं तु मन्ये अनुष्टुप्टीकेति, अनुष्टुप्छन्दसोऽतिलघुतया संक्षिप्ताक्षरताबोधनाय प्रथमतो जना अनुष्टुप्टीकेति वदन्तोऽपभ्रंशमाना आरेभिरे टुप्टीकेति वक्तुं, केषुचित्पुस्तकेषु दशमाध्यायादिवार्त्तिकान्ते टुबद्रूषणयाम् इति पाठोऽपि चेत्प्रामाणिकस्तर्हि अनुष्टुबद्रूषणी संक्षेपेण परमतनिरासतात्पर्यिका व्याख्याइति तात्पर्येण समाधेयः ॥ अद्वैतसिद्धिकारभृतयस्तु निजग्रन्थेषु निवीतोत्तरकौमारिलवार्त्तिकं टुप्टीकापदेनैव व्यवहरन्तीति तु तज्ज्ञानानां निर्विवादमेव ।

च्यते । परमिदं द्वादशाध्यायीपर्यन्तमेव मिलति अग्रे संकर्षकाण्डस्य वार्त्तिकं वर्त्तते न वेति नावधारयितुं पार्यते परं तु शाबरभाष्यं संकर्षकाण्डपर्यन्तं साकल्येन जैमिनीयसूत्रार्थनिरूपणपरं प्रणायि शबरस्वामिभिरिति भाट्टचन्द्रिकाद्वारा सम्यगवगन्तुं शक्यं यतस्तत्रतत्रसंकर्षसूत्राणि व्याचक्षाणेन ग्रन्थकृता शाबरं सांकर्षभाष्यं ग्रन्थतः संवादानेकस्थलेषूद्धृतम् ॥

तदेवं संकर्षव्याख्यानमुपलभ्यमानं भाट्टचन्द्रिकैव श्रुतं च शाबरम् । अपरे तु शास्त्रदीपिकातन्त्ररत्नभाट्टकुतूहलप्रभृतयोग्रन्था न संकर्षान्तमुपलभ्यन्ते किन्तु द्वादशाध्याय्यन्तमेव ।

यद्यपीदं पूर्वमीमांसाशास्त्रं न्यायशास्त्रमिव न युक्तिग्रन्थिकठिनं सुविस्तरतरं च, नापि वेदान्तशास्त्राणीव प्रतिपदं विप्रतिपत्तिपदं संशयशतसमुत्थानसंभवमनेकप्रस्थानमथ परश्शतसुकठिनग्रन्थग्रन्थिलं च, यतः संभाव्येतास्य प्रणाशः किन्तु अस्त्येतद् वेदाध्ययनसापेक्षं कर्मकाण्डोपजीव्यं चेति कालमहिम्ना वर्णाश्रमधर्मविलोपे सर्वाश्रमोपजीव्ये ब्रह्मचर्यं सर्वथा विलोपमुपेयुषि उपजीव्ययोः कर्मकाण्ड–वेदाध्ययनयोर्विलोपेन तथा प्रणाश यदद्य प्राचां मीमांसकानां नामापि नावधारयितुं पार्यते—प्रभाकरगुरूणां तौतातिकानां च न कश्चिद् ग्रन्थ उपलभ्यते केवलं तदीयं मतमुपलब्धेषु ग्रन्थे*षूत्थापितमिति कथंचिदवगम्यते । सौन्दलस्य तु मीमांसकतया नैयायिकग्रन्थेषु प्रसिद्धस्यापि उपलब्धपूर्वमीमांसाग्रन्थेषु मतोल्लेखोऽपि न विद्यते ॥

* तच्छिष्येण शालिकनाथेन शालिकनाथीनाम्ना वा पञ्जिकानाम्ना वा निर्मितोऽपूर्णग्रन्थो मिलति ।

केचित्पुनर्निरर्गलसंगरणनिपुणाः कुमारिलमेव तुतातभट्टं मन्यन्ते । तद्यथा

प्रबोधचन्द्रोदयनाटकेऽपि द्वि॰ २ अङ्के श्लोके २ ।

नैवाश्रावि गुरोः*मतं न विदितं तौ†तातिकं‡ दर्शनं तत्त्वं ज्ञातमहो न शालिका§गिरां वाचस्पतेः का कथा । सूक्तं नापि महोदधेरधिगतं माहा||व्रती नेक्षिता सूक्ष्मा वस्तुविचारणा नृपशुभिः स्वस्थैः कथं स्थीयते ॥ इत्युक्तम् ।

एतेन टीकोक्तव्याख्यानेन तुतातः कुमारिलभट्ट इति गुरुश्च प्रभाकर इति, शालिकपञ्जिका च प्रभाकरमतावलम्बिनां परेषां ग्रन्थ इति स्फुटं सिध्यति । एवं च तातः पितरि पुत्रे चेति प्रकारेण तुः—व्याख्यानास्थितस्तु—शब्दो यस्य तातः अर्थोपदेष्टृतया पितृस्वरूपस्स तुतातः कुमारिलभट्टस्तदनुयायिनस्तौतातिका इति मन्यन्ते ॥ अयं च पक्षो नास्मभ्यं रोचते यतः कुमारिलभट्टः शाबरे वार्त्तिकं प्रणिनायेति न तावता तस्य तद्दर्शनमित्याख्यातुं शक्यम्, अत एव तु इहैव—नैवाश्रावि गुरोर्मतमित्युक्तं न तु दर्शनं, ततश्चायं प्रबोधचन्द्रोदयकारस्य श्रीकृष्णमिश्रस्य तात्पर्यविषयीभूतं तौतातिकं दर्शनमन्यदेवास्ति कौमारिलवार्त्तिकादिति मन्यामहे अत एव तु सूत्रव्याख्यानप्रणेतृष्वेष शब्दो भवति रामानुजं दर्शनं, शाङ्करं दर्शनं, माध्वदर्शनमिति, न तथा कौमारिलं दर्शनमित्यभिद-

* प्रभाकरस्य । † कौमारिलम् ।

‡ यद्यपि प्रबोधचन्द्रोदयस्य मुद्रितपुस्तके माधवाचार्याणां सर्वदर्शनसंग्रहे च तौतातित-शब्द उपलभ्यते तथाऽपि तमहमनवधाननिबन्धनमनवबोधनिबन्धनं वा दुष्पाठं मन्ये । बहुषु चेत्पुस्तकेषु तौतातित इति पाठोपलम्भस्तर्हि तौतातिक-शब्दपाठस्याप्युपलम्भादर्थानुगुण्यात्पारम्परिकतौतातिकपदव्युत्पत्तिप्रसिद्ध्या च द्वयमेवास्तु तत्र तौतातितपदव्युत्पत्तिः प्रायः पूर्ववदेव केवलं तारकादित्वादितच्कृतोऽर्थविशेषः ॥

§ प्रभाकरमतावलम्बिनाम् ॥ महोदधेर्महाभाष्यकारस्य ।

|| पाशुपतशास्त्रसंहतिः ।

धत्ते, ततश्च तौतातिकं दर्शनं कौमारिलं दर्शनमिति प्रबोधचन्द्रोदयटीकायै तौतातिकं दर्शनं कौमारिलमिति ब्रुवते न बहु मन्ये । कथयन्ति च पुरातनमितिहासं—कदाचित्कुमारिलोऽभवदधीयानो मीमांसां गुरुगृहे तत्र च कस्यांचिलदानीमध्याप्यत्वेन प्रचलितायां जैमिनीयसूत्रव्याख्यायामासीत्पाठः—अत्रापिनोक्तं तत्र तुनोक्तमिति द्विरुक्तम्—इति, तं च पाठं निरीक्ष्य कुमारिलस्य गुरुर्विसिष्मियेऽत्यन्तं किमिदम्—अत्रापिनोक्तं तत्र तुनोक्तमिति कथं द्विरुच्येत, न हि द्विरनुक्त्या द्विरुक्तिसंभवः, ततश्च किंचित्कालं सुविचार्यापि नाप निर्णयं ग्रन्थार्थस्य । सति चैवमुन्मना एव पाठं विसृज्य निर्जगाम गृहाद् गुरुः । शिष्यस्तु कुमारिलः, अत्रापिना—अपि—शब्देन अयमर्थ उक्तः, तत्र तुना—तु—शब्देन उक्त इति द्विरुक्त इत्येवं रीत्या पदविभागं योजनां च लिखित्वा गुरुभार्यायै तत्समर्प्य निर्ययौ । गुरुस्तु पुनरुन्मनस्क एव सायमाययौ गृहं, पत्नी तु पतिमालोक्य शास्त्रचिन्तनश्रमजुषं जोषमेवार्पयाम्बभूव कुमारिललिखितं पदच्छेदमर्थसमन्वयं च ।

स च *गुरुर्भृशं पिप्रिये शिष्यस्य तादृशीमसाधारणीं व्युत्पत्तिं

---

* पूर्वमीमांसासु गुरुपदेन व्यवहृतः प्रभाकर इति तु शालिकनाथीयेन स्पष्टं सिध्यति—तथा हि ।

स्वाध्यायविधिवाक्यार्थविचारे प्रयतामहे ।
प्रभाकरगुरोर्दृष्ट्या मीमांसाऽऽरम्भसिद्धये ॥

इत्यारम्भश्लोकः ।

शास्त्रमुखं नाम गुरोराविष्कर्तुं गभीरमपि भावम् ।
शालिकनाथेन कृतं प्रकरणमेतत्प्रसन्नतरम् ॥

अयं च प्रथमप्रकरणान्तश्लोकः ।

द्वितीयप्रकरणस्यादौ च ।

अर्थासंस्पर्शिताशङ्का यथा शब्दस्य वार्यते ।
प्रभाकरगुरोः शिष्यैस्तथा यत्नो विधीयते ॥

अयं श्लोकः । एवं च गुरुः प्रभाकर इति न संशयः ।

अत एव गुरु-भट्ट-प्रभाकरा इति पुरुषत्रयतात्पर्येण केषांचिदभिधानमसंगतमेव ।

सरलचित्ततां चावधार्य तेनैतेन तु—शब्दार्थावधारणकौशलेन, गुरुस्तं कुमारिलं तु—तातम*वादीदिति अङ्गीकुर्मस्तावदिदं कुमारिलकौशलं तेन गौरवीं गुर्वनुकम्पां च कुमारिले, परं तु नैष तु—तातभट्टः स तु शबरस्वामिनोऽप्यतिप्राचीन इति पञ्जिकाचिन्तामणिप्रभृतिग्रन्थव्यासङ्गेन सुज्ञानम्।

यद्यपि भाट्टदीपिकापदेनैव सङ्कर्षचतुरध्यायी व्याख्यानमपि प्रसिध्यति तथाऽपीयं चतुरध्यायीव्याख्या न भाट्टदीपिका नापि खण्डदेवकृतिः परं तु भाट्टचन्द्रिकाख्या भास्करकृतिश्च। भाट्टदीपिकाकारात्खण्डदेवादनन्तरं भाट्टचन्द्रिकाकारो गम्भीरनामकब्राह्मणपुत्रः खण्डदेवकृतिं भाट्टदीपिकां द्वादशाध्यायीव्याख्यास्वरूपां स्वीयया सङ्कर्षचतुरध्यायीव्याख्यया भाट्टचन्द्रिकाख्यया संयोज्य भाट्टचन्द्रिकाख्यामकरोदिति विस्पष्टमस्ति एतद्ग्रन्थान्तिमश्लोकैस्तद्यथा—

खण्डदेवकृतभाट्टदीपिका लक्षणैः कतिपयैरसम्भृता।
इत्युदीक्ष्य बुधभास्करोऽग्निचिद्भारती बरिभराम्बभूव ताम्॥
अद्यावधि कृतिरेषाऽद्यन्तविहीनेति दीपिकाख्याऽऽसीत्।
षोडशकलाभिरधुना परिपूर्णा भाट्टचन्द्रिकात्वमगात्॥
आसीत् षोडशलक्षणी श्रुतिपदा या धर्ममीमांसिका।
सङ्कर्षाख्यचतुर्थभागविधुरा कालेन साऽजायत॥
गायत्री त्रिपदात्मिकेव विबुधैरद्यापि पापठ्यते।
तां पूर्णामकरोत्क्रमेण महता गम्भीरजो भास्करः॥ इति,

---

* वस्तुतस्तु तुतातभट्टो नाम कश्चनातीव प्रसिद्धः प्राचीनमीमांसक इति गुरुस्तु प्रसादेन तं कुमारिलं तुतातमुवाच आशीरात्मना, यथेदानीमपि कञ्चन सुप्रौढ पण्डितं गागाभट्टं मन्यन्ते।

तस्माद् द्वादशाध्यायीव्याख्या चतुरध्यायीव्याख्या च नैककर्तृका नैकनाम्नी चेति साधु प्रसाधितम् । एतद्व्याख्यानव्यतिरिक्तं सङ्कर्षकाण्डव्याख्यानं नोपलभ्यते केवलं शाबरं सङ्कर्षकाण्डव्याख्यानं ग्रन्थेषूपलभ्यते उद्धाररूपेण, परं तु शाबरं सङ्कर्षव्याख्यानं न केनापि बहुधा ज्ञायते क्वाऽप्युपलभ्यते वा । मन्ये आधुनिकानां विद्याविवर्द्धनरसिकानां देशान्तरीणानां सम्राड्जातीयानामखण्डोद्यमानामुद्योगेन विलुप्तप्रायप्रचारमपि साङ्कर्षशाबरव्याख्यानम्—अलवर—जयपुर—जम्बूप्रदेशादिस्थितमहापुस्तकालयेभ्योऽन्वेषणेन लभ्येतेति ।

यतः शाबरसाङ्कर्षव्याख्यानं नातिचिरं विलुप्तप्रचारं भाट्टचन्द्रिकायां तदीयपङ्क्तीनामुद्धारदर्शनात्, अस्ति चायमुद्धारस्तादृशो येनानुमातुं शक्यते यदयं निरीक्षितव्याख्यानेन केनचित्पुरुषेणोद्धृतः पाठ इति । एवं च भाट्टदीपिकाकारः खण्डदेवो जगन्नाथस्य पण्डितराजोपाधेर्मीमांसासु गुरुस्तत्समकाल इति सुनिश्चितं, यतः पण्डितराजः स्वयमाह रसगङ्गाधरे देवादेवाध्यगीष्ट स्मरहरनगरे इति, ।

तस्मात् शाहजहांनाम्नः सुप्रसिद्धसम्राजः प्रेमपात्रं पण्डितराज इति तस्य शाहजहांसमकालता । ततश्च पण्डितराजगुरुणा खण्डदेवेन निर्मितायाः दीपिकायाः पूर्तिस्वरूपा इयं भाट्टचन्द्रिकाऽतिनवीनेति स्पष्टमवगम्यते, तत्काले चेच्छाबरभाष्यपुस्तकं प्रचलितमासीत्तर्हि तत्काललिखितपुस्तकानामेतत्कालपर्यन्तावस्थानस्य सर्वथा सम्भावितत्वेन प्राचीनग्रन्थसमासादनरसिकैः शाबरसाङ्कर्षभाष्यपुस्तकलाभे कृतः समुद्योगोऽवश्यं फलेग्रहिरिति साधु सम्भाव्यते ॥

एतस्याश्चन्द्रिकाख्यव्याख्याया एकं पुस्तकं जडे इत्युपाधिधारिणां श्रीरामचन्द्रशास्त्रिणां पुस्तकालयादवाप्तं द्वितीयं परिव्राजक-

प्रवरतारकाश्रममठस्थपुस्तकागारात्तृतीयं काशीस्थराजकीयप्रधानवि-द्यामन्दिरपुस्तकागारादेवं पुस्तकत्रयमासाद्यारब्धे मुद्रणे अवधानेन पुस्तकत्रयपाठावलोकने एकमेव त्रिष्वेषु पुस्तकेषु मातृकास्वरूपं रामच-न्द्रशास्त्रिणां*पुस्तकमवशिष्टे द्वे अपि तत एव लेखिते अतिनूतने अशु-द्धिबहुले च इति अतिसमनियततया तदीयलेखपाठादिभङ्ग्याऽवधार्या-त्यन्तं खिन्नमना मुद्रणे नातिपवित्रं सन्दिग्धाक्षरं त्रुटिबहुलं क्वचित् च्यु-तपाठमेकपुस्तकमपर्याप्तमिति सविशेषमनुस्मृत्य हतप्रायप्रयत्न एवासं तथाऽपि काशीस्थेन श्रेष्ठिश्रेष्ठेन श्रीगोविन्ददासगुप्तेन सुमहताऽऽया-सेन एकं मदरासप्रान्तात्सङ्कर्षणकाण्डपुस्तकमानाय्य दत्तं, तदिदं मध्ये द्वित्रस्थलेषु खण्डितपत्रमपि पुस्तकं स्वक्षरं सूत्रवृत्तिविभागवत्, केनचिदधीतं, शोधितं, नानतिपवित्रं, प्राप्तमिति बहूपकृतोऽस्म्य-स्मिन् मुद्रणकार्ये । ततश्च यत्र मदरासप्रान्तप्राप्तपुस्तकं विकलं तत्र केषुचित् पत्रेषु एकमात्रेण रामचन्द्रशास्त्रिणां पुस्तकेन मुद्रितपुस्त-कमशुद्धं सूत्रमात्रावलम्बेन वृत्तितात्पर्यमवधृत्य, यत्र तु द्वयमपि तत्रोभाभ्यामपि ताभ्यां मुद्रणकार्ये निरवहम् । आशासे च एतस्य मुद्रितपुस्तकस्य प्रचारेणावधृतसङ्कर्षकाण्डसद्भावाः केचन शास्त्रोन्न-यनपरायणाः क्वचिल्लिखितं सङ्कर्षपुस्तकमुपलभ्य मां कृपयाऽवबोधये-युश्चेत्तर्हि तदुपसाद्य पुनरपि पाठापपाठाधिकपाठादिनिर्णयं कुर्या-मुपस्कुर्यां पुनरपि सङ्कर्षमुपकुर्यां च जिज्ञासून् अभिमन्येय चात्मानं शास्त्रविवर्द्धनकृतश्रममिति ।

यद्यपि प्रथमं सङ्कर्षे टिप्पणीं कर्तुमहं प्रवृत्तस्तदन्वतिश्रममुद्रयं च किञ्चिदादौ तथाऽपि भूयोव्यापारस्य मुद्रणनिर्माणयोर्यौगपद्यम-

* I am grateful to M. M. Gangadhara Śastri of the Sanskrit College, Benares, for his kind information as to the existence of the book in the house of P. Ram Chandra Śastri Jare.

सम्भावनीयमित्यभिमत्य पुनरुपारमम् । यतिष्ये च पुनर्यथाऽवकाशं तदीयसमापने ।

अस्त्येतदपीह विदुषां विमर्शनीयं यदत्र सङ्कर्षचतुरध्यायीसूत्राणि द्वादशाध्यायीसूत्रापेक्षयाऽल्पाक्षराणि न च वृत्तिविलिखितोऽर्थस्ततोऽवगन्तुमिङ्गितुं वा शक्य इति परमवैजात्यं, ततश्च सम्भाव्यते कदाचिद् वृत्तिकारेण भास्करेण सूत्रैकदेशा एव प्रतीकतया उद्धृता न तु साकल्येन सूत्राणीति, प्राचां हि विदुषामसकृद् दृष्टचरीयं रीतिर्यत्ते एकदेशमुपन्यस्यैव व्याख्यातुमारभन्ते, ततश्च विविधशास्त्रपरिशीलनश्रमजुषो विद्वांसोऽत्र स्वयं परीक्षिष्यन्ते किमेतानि सूत्राणि सकलानि विकलानि वेति । इदमपि चात्रावधेयमस्ति सङ्कर्षकाण्डस्थानां सकलसूत्राणामत्र व्याख्यानमथवाऽधिकरणसूत्राणामेव ।

सर्वं चैतद्विप्रतिपन्नं शाबरसाङ्कर्षोपलम्भेऽनायासेन विवेक्तुं शक्यमिति तदुपलम्भायैवोद्योग आवश्यकः । एवं चैतस्य विप्रतिपन्नत्वमवधार्याधिकरणान्यनुल्लिख्य विषयसूचनिकास्थाने यथोपलब्धानि सूत्राण्येवालिखम् । आशासे च भगवतोयज्ञनारायणस्य प्रसादेन चिरं वैकल्यमुपयातमिदं पूर्वमीमांसाशास्त्रं भाट्टचन्द्रिकोपेतसाङ्कर्षसौलभ्येन वैकल्यं जहदपि शाबरोपलम्भेन सर्वथा साङ्गं स्यादिति । अस्मिं चात्र कृतावधानो यदि कश्चन विद्वान् इहत्योऽथवा देशान्तरीणः शाबरसाङ्कर्षमुपलभेत मामनुगृह्य सन्दिशेत्तर्हि सर्वसाधारण्येन तत्प्रकाशं कुर्यामिति शम् ।

| | |
|---|---|
| आश्विनकृष्णाप्रतिपदि-भौमे । सं. १९५० । | सत्सम्प्रदायाचार्यः<br>पण्डितस्वामिश्रीराममिश्रशास्त्री,<br>वाराणसीनिवासनिबद्धप्रवृद्धसमादरः ॥<br>काश्यां दशाश्वमेधे अगस्त्यमुन्याश्रमाश्रमः । |

श्रीमते रामानुजाय नमः ।

# सङ्कर्षकाण्डस्यसूत्रसूचनिकापत्त्रम् ।

## जैमिनीये सङ्कर्षे त्रयोदशाध्यायस्य प्रथमः पादः ।



## अथ त्रयोदशाध्याये द्वितीयः पादः ।



## अथ त्रयोदशाध्याये तृतीयः पादः ।

## अथ त्रयोदशाध्याये चतुर्थः पादः ।

### अयं च यूपपाद इत्युच्यते ।



## अथ चतुर्दशाध्यायस्य प्रथमः पादः ।

### अयमिष्टकापादः ।



* विकर्णीति पाठः ४२ पृष्ठे मुद्रितः प्रामादिकः विकर्णीत्येव तु युक्तः । कृष्णयजुःसंहितायां पञ्चमाष्टके तृतीयप्रपाठके यद्विकर्णी उपदधातीति पाठोपलम्भादनन्त्यसूत्रस्य चयने विधीयमानेष्टकोपधाननिर्णायकतया विकर्णीति पाठस्य तत्प्रकरणपठितत्वेनायमेव वैदिकः पाठो युक्ततर इति प्रत्येमि ।

## अथ चतुर्दशाध्याये द्वितीयः पादः ।

### अयमवदानपादः ।



## अथ चतुर्दशाध्याये तृतीयः पादः ।

### अयं प्रैषपादः ।



## अथ चतुर्दशाध्याये चतुर्थः पादः ।

### अयं च होमपादः ।

## अथ पञ्चदशाध्याये प्रथमः पादः ।

## अयं कालपाद इत्युच्यते ।



## अथ पञ्चदशाध्याये द्वितीयः पादः ।

## अयमग्निपाद इत्युच्यते ।



* वषट् ते इति तु पुस्तकान्तरे सूत्रपाठः ।

† स्वाहेत्यालेखन इति पाठोऽपि पुस्तकान्तरस्थः ।

## अथ पञ्चदशाध्याये तृतीयः पादः
## अयं च ग्रहपादो इत्युच्यते ।



## अथ पञ्चदशाध्याये चतुर्थः पादः ।
## अयं आर्षेयपादो वरणपादो वा ।

## अथ षोडशाध्याये प्रथमः पादः ।

## हौत्रकाध्याये सामिधेनीपादः ।



## अथ षोडशाध्याये द्वितीयः पादः ।

## निगदपादोऽयम् ।



## अथ षोडशाध्याये तृतीयः पादः ।

## वषट्कारपादोऽयम् ।

अथ षोडशाध्याये चतुर्थः पादः ।



इति सूत्रसूचनिका समाप्ता

नमः पूर्वाचार्येभ्यः ।

समाप्तञ्च पूर्वमीमांसाशास्त्रम् ॥



श्रीमते रामानुजाय नमः ।

# शुद्ध्याशुद्धिसूचीपत्त्रम् ।

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ |
|---|---|---|---|
| वावै | वाग्वै | ६ । | १२ |
| त्यष | त्यैष | ६ । | १६ |
| नह्येति | नार्ह्यति | ९ । | ४ |
| वस्या | वस्य्या | १० । | ७ |
| बह्व | बह्वृ | ११ । | ७ |
| लोम्पृणा | लोकम्पृणा | २४ । | १२ |
| प्राप्न | प्राप्ने | ३७ । | १३ |
| प्रक्रान्तर | प्रक्रान्त | ३८ । | ८ |
| राणामि | राणामि | ३९ । | २ |
| हस्तादि | हस्तादि | ४० । | १ |
| हिक | हित | ४४ । | १५ |
| पत्तो | पत्तैा | ४६ । | २५ |
| हृदयःश्च | हृदयश्च | ४७ । | १८ |
| मिध्य | मिध्म | ४८ । | १० |
| छन्दा | छन्दां | ५५ । | २ |
| म्यस्या | म्यस्या | ५६ । | ८ |
| त्यास्यै | त्यस्यै | ५६ । | १६ |
| वस्य | वश्य | ६२ । | २ |
| देवत्त्यत्वा | देवत्वा | ६४ । | १९ |
| सोमसुत्या प्रयोप्रयो | सोमसुत्या प्रयो | ७१ । | ८ |
| त्यामेष्ट्या | त्तामेष्ट्या | ७१ । | २१ |
| ये प्राप्न | ये प्राप्ता | ७२ । | १६ |
| अनिष्टायग्रणस्य | अनिष्ट्वायग्रणस्य | ७२ । | १८ |
| मग्निप्र | मग्निं प्र | ८० । | ११ |
| वैराजास्य | वैराजस्य | ८९ । | ७ |
| त्योर्वेदो | त्योर्वेदे | ९५ । | १ |
| कत्व | कत्वं | ९५ । | २ |
| यों | यो | ९५ । | २ |
| न विदां | निविदां | १०८ । | १४ |
| वाहनस | वाहनंस | १०९ । | ८ |
| शूद्रस्यति | शूद्रस्येति | ११३ । | १४ |
| षोडाश | षोडश | १२२ । | ३ |
| मिवाहनं | मिवावाहनं | १२५ । | १४ |
| त्वाद्व | त्वाच्च | १२५ । | १५ |
| धात | धात्त | १२५ । | २३ |



॥ श्रियै नमः ॥

श्रीपतये नमः ।

श्रीमते रामानुजाय नमः ।

प्रणम्य जैमिनिमुनिं खण्डदेवकृताविह
अनुग्रहाय मन्दानां सङ्ग्रहोऽयं विधीयते ॥ १ ॥

अथ पूर्वमीमांसाया अवशिष्टा संकर्षण-संकर्ष*काण्ड-पदद्वयव्यवहृता चतुरध्यायी भाट्ट†दीपिकानामकव्याख्यासंवलिता आरभ्यते ।

ॐ अविघ्नमस्तु ॥ एवं द्वादशभिरध्यायैः प्रकृतिविकृतिभेदेन कतिपयान् न्यायान् संशोध्य तैरेव न्यायैरितस्ततो विप्रकीर्णान्वेदवाक्यार्थानैदम्पर्येण सम्यग् निष्कृष्य निर्णेतुमेषा चतुरध्याय्यारभ्यते । अत एव संकर्षे न प्रत्यधिकरणं सङ्गत्यपेक्षा ॥

## सू० अनुयजतीति ॥ १ ॥

ज्योतिष्टोमे सोमस्याग्ने! वीहीत्यनुयजतीति श्रुते वाक्ये सोमयागोद्देशेन मन्त्रविधिः । इति-शब्देन करणत्वस्यानु-शब्देन पश्चाद्भाविनः कार्यस्य चोक्तिः । यागोत्तरमनुमन्त्रणं वा विधीयत इति प्राप्ते यजिश्रुत्योपस्थितस्य यागान्तरस्यैव सोमयागोत्तरकालविशिष्टस्य विधिः । तस्मादनुवषट् कृत्यं देवतानां तृप्त्या इति तृप्त्यर्थतावादस्यान्यथाऽनुपपत्तेः ॥

---

* यथा चैतस्याः संकर्षण-संकर्ष-काण्डपदेन व्यवहारस्तथा निरवोचाम शास्त्रदीपिकाभूमिकायाम् । श्रीभाष्ये तृतीयाध्याये तृतीयपादे प्रदानाधिकरणे श्रीभाष्यकाराः "तदुक्तं सांकर्षणे 'नाना वा देवतापृथक्त्वा'दि"ति सूत्रमुद्धरन्तः संकर्षकाण्डं संकर्षणकाण्डपदेनापि व्यवहरन्तीत्युभयथाऽपि व्यवहारः । यद्यपि शाङ्करभाष्यादिषु नाना वा देवता पृथग् ज्ञानादिति पाठ उपलभ्यते, उपलभ्यते चानन्दज्ञानादिकृतभाष्यव्याख्यानेऽपि तथा पाठसमादरः, तथाऽपि श्रीभाष्यस्थं नाना वा देवतापृथक्त्वादिति, शाङ्करभाष्यस्थं नाना वा पृथग् ज्ञानादिति चार्थकथनमात्रं न तु सूत्रानुपूर्वीनिर्देशः सङ्कर्षे देवताकाण्डे चतुर्दशाध्याये द्वितीयपादे "तेषां पृथक्" इति, "नाना वा इति च पृथक्सूत्रद्वयानुपूर्वीदर्शनात् । तदिदमग्रे चतुर्दशे स्फुटमिति नेह बहु प्रपञ्च्यते इति ॥

† यद्यपि संकर्षणचतुरध्यायी शबरस्वामिभिर्व्याख्याता तथाऽपि न तद्भाष्यमुपलब्धुमीश्महे इति सांप्रतमतिकष्टेन प्राप्तमिदमेव प्रकाशयामः ।

## सू० स द्रोणकल*शात् ॥ २ ॥

सोऽयमनुवषट्कारो द्रोण†कलशस्थद्रव्येण यष्टव्यः, तस्य ध्रौ‡वाज्यवत् सर्वार्थत्वात् द्रोणकलशं प्रकृत्यैषा वा §एतेषां योनिरिति श्रुतेः। न सर्वं जुहोतीति वचनलब्धस्य सोमयागद्रव्यशेषस्य भक्षणार्थतयाऽप्युपपत्तेरिति प्राप्ते भक्षवदनुवषट्कारस्यापि पूर्वेष्टशेष एव द्रव्यम्। संस्था वा एषा यदनुवषट्कारः संस्थाभक्ष इति पूर्वद्रव्यसमापकत्वश्रुत्यविशेषात् स उ एव सोमस्य स्विष्टकृद्भाग इति श्रुत्याऽनुयागस्य स्विष्टकृद्भागत्वेन प्रतिपत्तित्वावश्यम्भावाच्च, एतेन सावित्रे नानुवषट्करोति न भक्षयतीत्यपि लिङ्गमुपपन्नम् ॥

## सू० तन्त्रं प्रदानम् ॥ ३ ॥

तस्यार्थवादसहकृतमन्त्रवर्णसमर्पिताग्निस्विष्टकृद्देवताकतया दार्शपौर्णमासिकस्विष्टकृद्वदेव तन्त्रेणानुष्ठानमिति प्राप्तेऽनु-शब्देन तत्तदभ्यासोत्तरकालविधानेन तस्य चाव्यवहितस्यैव स्वरसतः प्रतीतेरावृत्तिः। न च पृषदाज्यवत्यात्रान्तरे स्थापनम्। एकदेशद्रव्यकत्वेनाप्रयोजकत्वात्। एतेन द्विदेवत्यर्त्तुयाजादिष्वनुवषट्कारनिषेधोऽप्युपपन्नः। एवमेव भक्षाणामप्यावृत्तिरुपपादनीया ॥

## सू० शामित्रं तीर्त्वा ॥ ४ ॥

वाजपेये प्राजापत्यान्प्रकृत्य तान्पर्यग्निकृतानुत्सृजते ब्रह्मसाम्न्यालभत इति श्रुतयोः ‖पर्यग्निकरणसं¶ज्ञपनयोर्मध्यवर्त्तिपदार्थः *शामित्रदेशं

---

* लोके कलस-शब्दस्य दन्त्योपधत्वेऽपि वेदे तालव्योपधपाठ एव साम्प्रदायिकः। शुक्लयजुःसंहितायाम् एकोनविंशाऽध्याये २६ मन्त्रे वायव्यैर्वायव्यान्याप्नोति स तेन द्रोणकलशमिति तालव्योपधपाठदर्शनात् ॥

† जुहूसदृशे महापुष्करे द्वे पात्रे ते द्रोणकलशपदवाच्ये ॥

‡ ध्रुवानामकपात्रस्थेनाज्येनेत्यर्थः ॥

§ तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीयप्रपाठके द्वितीयानुवाके द्रोणकलशऽआधवनीय इति ॥

‖ हविषामासमन्तात्प्रादक्षिण्येनोल्मुकस्य परिभ्रमणं पर्यग्निकरणमित्युच्यते ॥

¶ उपाकरणबर्हिषि प्रतीचीनशिरसमुदीचीनपादं पशुं शाययित्वा शमितारः संज्ञपयन्ति एवरीत्या पशोर्मरणं सज्ञपनमित्युच्यते ॥

* आग्नीध्र आहवनीयसमीपे उल्मुकं निधाय यथाऽऽगतन्त्रिः पुनः पर्येति तदनन्तरं प्रतिप्रस्थाता उपवेषेण पुरःणगार्हपत्यादुदीचोऽङ्गारन्निरूहति "मातरिश्वनो धर्मो-

प्रति प्रापणं, स च क्रतुपशुभिः सह *प्रातःसवन एव कार्यः। अध्रि†गुप्रैषस्य तदानीमेव वक्तव्यत्वात् । अन्यथा प्रैषस्यावृत्त्यापत्तेः । निष्ठाप्रत्ययोक्तस्योत्सर्जनपूर्वत्वस्य व्यवधानेऽपि भुक्त्वाऽऽगत इत्यादाविवाविरोधात् । यूपादुन्मोचनमेव वोत्सर्गपदार्थ इति कार्ष्णाजिनेर्मतेन प्राप्ते यूपादुन्मोचनादिप्राणवियोगान्तव्यापारस्यैकपदार्थत्वात्संज्ञपनकरणकभावनायाः सेतिकर्त्तव्यताकाया एवालम्भविधिनोत्कर्षादुत्सृजतिरुत्तरव्यापारोपरममनुवदतीति क्त्वा-प्रत्ययोक्तमव्यवहितपूर्वत्वं न बाधनीयम् । अध्रिगोस्त्वावृत्तिर्मनो ‡ तादेरिव युक्तैवेत्युक्तम् ॥

---

ऽसीति मन्त्रेण तानादय दक्षिणया द्वारा दक्षिणेन विहारं ब्रह्मयजमानयूपानामन्तरत आहरन् स्वयं बहिर्गच्छन् अन्तरेण चात्वालोत्करावुदगत्वा शामित्रशालायां निदधाति अयं निहितोऽग्निः शामित्र इत्युच्यते । यश्च उर्ध्वाग्रमसिवत् स्फ्यं दक्षिणहस्ते धारयन्नुत्करदेशे च दक्षिणाभिमुखस्तिष्ठति अध्वर्युणा आश्रवणे कृते अस्तु-शब्दपूर्वकश्रौषट् शब्दोच्चारणरूपप्रत्याश्रवणं करोति स आग्नीध्र इति अग्नीदिति चोच्यते ।

* अध्वर्युः अग्निर्मूर्धादिव इत्येकामाहुतिं द्वेमिन्द्राहुती व्याहृतीश्च हुत्वाऽऽह प्रशास्तः प्रसुहि । तेन सर्प्यतेत्युक्ते सर्वे यथा प्रसृप्तं निःसर्प्यन्ति सनिष्ठन्ते प्रातः सवनम् अथ प्रातःसवनमित्यारभ्यैतदन्तं कर्म्मप्रातःसवनमित्युच्यते ॥

† अध्रिगुप्रैषार्थो मैत्रावरुणप्रैषोऽभिहितः अथ होताऽध्रिगुमन्वाह । "दैव्याः शमितार" इति । अध्रिगुप्रैषमन्त्रस्तु । "दैव्याः शमितार उत मनुष्या आरभध्वम् । उपनयत मेध्यादुरः । यथायथाऽस्य श्रपणं तथातथे" त्यन्तः । अत्र शमितारः-विशसनकर्तारः ते च द्विविधाः देवरूपा मनुष्यरूपाश्च ते एव सम्बोध्यन्ते हे दैव्याः शमितारः । अपि च हे मनुष्याः शमितारः यूयमुभयेऽपि वक्ष्यमाणं कर्म कर्तुमारभध्वम् इत्यर्थ इति साम्प्रदायिकाः ।

‡ मनसा उता रक्षिता सर्वैर्देवैः प्रार्थिता देवता मनोताइति तैत्तिरीयब्राह्मणभाष्ये सायनाचार्याः, ततश्च मनोता-शब्देनाग्निरुच्यते "अग्निर्वै देवानां मनोतेति" श्रुतेः, तैत्तिरीयब्राह्मणे तृतीयकाण्डे षष्ठप्रपाठके दशमानुवाके, । "त्वं ह्यग्ने प्रथमो मनोतेति" श्रुतेश्च तैत्तिरीयसंहितायां च षष्ठकाण्डे तृतीयप्रपाठके नवमानुवाके, "पशोर्वा आलब्धस्य मनोऽपक्रामति मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति" ॥

ऋग्वेदीयैतरेयब्राह्मणस्य द्वितीयपञ्चिकायां प्रथमाध्याये दशमखण्डे मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्याहाध्वर्युस्त्वं ह्यग्ने प्रथमोमनोतेति सूक्तमन्वाह तदाहुर्यदन्यदेवत्य उत पशुर्भवत्यथ कस्मादाग्नेयीरेवमनोतायै हविषोऽवदीयमानस्यान्वाहेति तिस्रो वै देवानां मनोतास्तासु हि तेषां मनांस्योतानि वाग्वै देवानां मनोता तस्यां हि तेषां मनांस्योतानि गौर्वै देवानां मनोता तस्मिन् हि तेषां मनांस्योतान्यग्निर्वै देवानां मनोता तस्मिन् हि तेषां मनांस्योतान्यग्निः सर्वा मनोता अग्नौ मनोताः सङ्गच्छन्ते तस्मादाग्नेयीरेव मनोतायै हविषोऽवदीयमानस्यान्वाहेति ।

## सू० क्रत्वङ्गं वा ॥ ५ ॥

अ*ग्निं चित्वा सौत्रा†मण्या यजेतेति संयोगस्य कालार्थत्वाभावात्स्थण्डिलरूपद्रव्यार्थत्वमारादुपकारकाणामपि पवमानहविषां द्रव्याङ्गत्वदर्शनात् ।

श्येनचितं चिन्वीत ‡स्वर्गकाम इति फलार्थायाश्चितिक्रियाया आकाङ्क्षया तदङ्गत्वमेव वेति प्राप्ते सन्निपातिनोः स्थण्डिलचयनयोरारादुपकारकानाकाङ्क्षतया तत्संयोगात्क्रतुस्तदाख्य इति न्यायेन साग्निचित्यक्रतोरेव चिनोत्यर्थत्वात्क्रत्वङ्गं सौत्रामणी वैमृधवत्क्रतोरनन्तरमेवानुष्ठेया ॥

## सू० चयनाङ्गं वा ॥ ६ ॥

§रुद्रो वा एष यदग्निस्तस्य तिस्रः शरव्याः प्रतीची तिरश्च्यनूची ताभ्यो वा एष आवृश्च्यते योऽग्निं चिनुतेऽग्निं चित्वा तिसृ‖धन्वमयाचितं ब्राह्मणाय दद्यात्ताभ्य एव नमस्करोत्यथो ताभ्य एवात्मानं निष्क्रीणीते इति श्रुतं तिसृधन्वदानमपि पूर्वन्यायेन क्रत्वङ्गमिति प्राप्ते स्थण्डिलस्यैव रुद्रत्वात्तदीयशरव्याभिरग्निचित आव्रश्चनमेतद्दानेन ताभ्य आ-

---

* तैत्तिरीयसंहितायाः पञ्चमकाण्डे षष्ठप्रपाठके तृतीयानुवाके ।

† सप्तमीहविर्यज्ञसंस्था पशुत्रयसाध्या सौत्रामणीशब्देनोच्यते सा द्विविधा एका कौकिली अपरा चरका अग्निं चित्वा सौत्रामण्या यजेतेत्यादावङ्गत्वेन श्रूयमाणा चरकैव।

‡ शाखान्तरे तु सुवर्गकामइति पठन्ति ।

§ तैत्तिरीयसंहितायाः पञ्चमकाण्डे पञ्चमप्रपाठके सप्तमानुवाके धनुर्दानप्रकरणे "रुद्रो वा एष—इत्यारभ्य आत्मानं निष्क्रीणीत" इत्यन्तोमन्त्रः तदर्थस्तु योऽयमग्निः स एष रुद्रः क्रूरोदेवः। "रुद्रोवै क्रूरः"। ६। २। ३। इति ह्यन्यत्राम्नातम्। तस्य च क्रूरस्य तिस्रः शरव्याः शरेण साध्याः प्रत्यञ्चः तिस्रः शरव्याः । यद्वा हिंसकत्वादिषुरेव शरव्या-सा च त्रेधा प्रतीची सम्मुखमागच्छन्ती, तिरश्ची पार्श्वयोर्गच्छन्ती अनूची पृष्ठत आगच्छन्ती चेति। एवं सति योग्निं चिनुते स एष ताभ्यः इषुभ्यो निमित्तभूताभ्य आवृश्च्यते सर्वत श्छिद्यते ताभिः प्रहृतो भवीत्यर्थः । अतस्तत्परिहाराय तिसृभिरिषुभिर्युक्तमेकं धनुः अयाचितमपि ब्राह्मणाय दद्यात् तेन दानेन बाधिकाभ्यः ताभ्यइषुभ्योनमस्करोत्येव, । अपि च ताभ्यइषुभ्यः सकाशादेव आत्मानं स्वशरीरं निष्क्रीणीते ।

‖ तैत्तिरीयसंहितायाः पञ्चमाष्टके पञ्चमप्रपाठके सप्तमानुवाके, तिसृधन्वमयाचितमिति यजुः, तैत्तिरीयसंहितायाः प्रथमकाण्डेऽष्टमप्रपाठके एकोनविंशानुवाके, "तिसृधन्वढं· शुष्कदृतिर्दक्षिणा," तदीयब्राह्मणे च, "तिसृधन्वठं· शुष्कदृतिर्दक्षिणा समृद्ध्यै," । तिसृभिरिषुभिर्युक्तं धनुस्तिसृधन्वं तत्प्रक्षेपाय निर्मिता शुष्कदृतिस्तदुभयत्र देयमिति माधवाचार्याः ।

त्मनो निष्क्रयवादश्चास्य क्रियाङ्गत्व एवोपपद्यते । न च सन्निपातिनो-ऽङ्गस्याङ्गान्तरं विप्रतिषिद्धं रथन्तराङ्गस्य वरदानस्य दर्शनात् ॥

## सू० योऽग्निम् ॥ ७ ॥

यो*ऽग्निं चिनुयात्तं दक्षिणाभीराधयेदित्याम्नातं दक्षिणाभीराधन-मपि वरदानवच्चयनाङ्गमिति प्राप्ते दक्षिणाया भृतित्वेनानत्यर्थत्वात्त-स्याश्च प्रयोगप्रयुक्तत्वाद् दृष्टार्थत्वाच्च क्रतोरेवाङ्गम् ॥

## सू० गुणचोदना वा ॥ ८ ॥

प्रकृतितः प्राप्तदक्षिणात एता दक्षिणा भिन्ना एव विधीयन्त इति धेन्वेव प्राकृतीनां बाध इति प्राप्ते राधनस्य प्रीत्युत्पादनरूपत्वाद्गुणवि-धिरेवायं कल्पसूत्रमूलभूतश्रुतावधिकदक्षिणाविधानादुभयसमुच्चये सिद्धे याऽधिका दक्षिणा सा यथा प्रीतिजनिका स्यात्तादृशी देयेत्यर्थः ॥

## सू० उल्मुकहरणे ॥ ९ ॥

दैत्ते पशावग्निना पुरस्तादेति रक्षसामपहत्या इति श्रुतं पशोः शामित्रदेशनयनकाले वपानयनकाले चोल्मुकस्य नयनं प्रत्याहरणं च तद्वाजपेये प्राजापत्यानां क्रतुपशूनां च कालभेदेन प्रचारादावर्त्तेत, उभये-षामपि राक्षसापहननस्यावश्यकत्वादिति प्राप्ते रक्षोऽपहननश्रुतेरर्थवाद-त्वेन अपणार्थतायाा एवोचितत्वात्कालान्तर आनीतस्यापि अपणार्थत्वा-नपायात्तन्त्रम् ॥

## सू० अभितः ॥ १० ॥

स्वाहा † देवेभ्योदेवेभ्यः स्वाहेत्यभितो वपां जुहोति पुन ‡ रूर्जा, स-

---

* तैत्तिरीयसंहितायाः पञ्चमकाण्डे षष्ठप्रपाठके अष्टमानुवाके ।

† तैत्तिरीयसंहितायास्तृतीयाष्टके प्रथमप्रपाठके पञ्चमानुवाके तृतीयम-ण्डले, स्वाहा देवेभ्य इत्यादिः ॥

‡ "पुनरूर्जा सहरय्येत्यभितः पुरोडाश माहुती जुहोति" तैत्तिरीयसंहितायाः प्रथमाष्टके ।

हरत्येत्यभितः *पुरोडाशमाहुती जुहोतीत्यादावभितोवृत्तं निधेहीत्यादाविव देशवादः, अभित इत्यस्य प्रतिसम्बन्धिनि पदे द्वितीयाविधानाद्यथा वपा पुरोडाशश्च मध्यतोभवति तथा जुहुयादित्यर्थ इति प्राप्ते कर्मण एव पूर्वं प्रक्रान्ततया वपापदस्य तद्द्रव्यकयागपरत्वात्तत्पूर्वापरकालवादोऽयं, न च लक्षणा दोषः। "अभिरभाग" इति स्मृत्यैव तदनुमतेः। किञ्च अभितःपदस्योभयत इत्यर्थकस्य देशवादे कतरयोर्देशोर्ग्रहणम्। अनियमे विकल्पापत्तिः। कालवादे तु पूर्वापरयोर्द्वयोरेवोपस्थितेर्न क्षतिः। अत एव देवेभ्यः स्वाहेत्युपरिष्टादिति श्रुत्यन्तरे व्यक्तः कालवादः॥

## सू० हविष्कृत् ॥ ११ ॥

हविष्कृदेहीति मन्त्रे हविष्कृत्पदेनाध्वर्युरुच्यते। हविष्करणस्याध्वर्यवत्वात् मन्त्रस्तु परेण प्रयोज्यः। प्रैषेषु च पराधिकारात्। वाग्देव्येव वा हविष्कर्त्री। वाग्वै हविष्कृद्वाचमेव तदाह्वयतीति वाक्यशेषात्। न चैतत्पक्षे आज्यौषधसान्नाय्यानामविशेषेण दैवी कर्त्र्यापद्यत इति वाच्यम्। पशुपुरोडाशे हविष्कृता वाचं विसृज्य पशुं विशास्तीति श्रवणेनौषधमात्रहविःकर्तृत्वावगतेः। आज्यनिर्वापस्य पूर्वं कृतत्वेन तदर्थमाहूताया वाग्देव्याः पुनराह्वानाभावेन वाग्विसर्गे हविष्कृत्प्रपकालिकत्वविध्यनुपपत्तेः। न च शास्त्रान्त्याधिकरणन्यायेन प्रैषावृत्तिः। एतत्पक्षे प्रैषस्यादृष्टार्थत्वेन प्रयाजानामिव प्रसङ्गोपपत्तेः। तस्मादौषधहविष्कृद्देव्येवेति प्राप्ते पत्न्येव हविष्कृदुपोत्तिष्ठति देवानृषीन्पितृन्त्साभिद्रुत्या वहन्तीति वाक्यशेषाद् दृष्टार्थत्वाच्च वाचोहविष्कृत्त्वमर्थवादमात्रम्॥

## सू० नयने ॥ १२ ॥

च†मसाध्वर्यूणामिव पृथग्वरणाभावाच्छमितृ–पदेन यौगिकवृत्त्या वृतावृतसाधारणो यः कश्चिदभिधीयत इति स्थितं तृतीये। ते च शमि-

---

* मदन्तीनलेन सिद्धस्य पिष्टपिण्डस्य चतुर्थ्यन्तदेवतानामपूर्वकत्वेति पदान्तेन मन्त्रेण अभिमर्शनानन्तरंकूर्मवदाकारे कृते पुरोडाशपदवाच्यं तत्। "यथाहस्म भगवानापस्तंबः" अतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतकृतिं अश्वशफमात्रं करोति।

अतुंगोऽनुच्चपृष्ठः अनपूपाकृतिः न चापूपवदतिनीचः किं तु यथा यं कूर्मस्य प्रकृतिरिव भवति तथा करोति।

† तैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे द्वादशप्रपाठके नवमानुवाके चमसैर्होतारः चमसाध्वर्यव इति सायनाचार्याः।

तारोबहवः कार्याः । शमितारो नयन्तीति विधौ शमितार उपेतनेत्यादिमन्त्रेष्वपि बहुवचनदर्शनादिति प्राप्ते शमितुरेकत्वेऽप्यन्येषामपि पशुना सह शामित्रदेशगमनदर्शनाच्छमितृसाहित्यमात्रेण सर्वेषां शमितार इति निर्देशः । विनिषद्योद्गातार इत्यनुद्गातृसाहित्येन प्रयोगदर्शनात् ॥

## सू० मनुष्याः ॥ १३ ॥

ते सह गन्तारो ये केचन भवेयुः । दैव्याः शमितार आरभध्वमुत मनुष्या इति मन्त्रे तु ऋत्विग्भूतदेवप्राये पाठेनोपसंहारादिति प्राप्ते ऋत्विज एव स्युः । तेषामुल्मुकनयनादिविहितकर्मार्थं गमनस्य क्लृप्तत्वात् । कर्मासंबद्धेषु तत्कल्पने मानाभावात् ॥

## सू० शमिताऽन्यः ॥ १४ ॥

दैव्याः शमितार इत्यारभ्य शमितारो यदत्र सुकृतं कृणवतेत्यन्तं यावन्तः पदार्थाः कर्त्तव्यत्वेन कीर्त्तितास्ते सर्वे शमनक्रियान्तर्भूता एव । तद्बहिर्भूता अपि सामर्थ्यलब्धास्तद्गतमक्षिकानिवारणादयोऽपि तथा । तानेतान् श्रौतानार्थांश्च पदार्थानेकः सह गन्तृभ्योऽन्यः शमितैव कुर्यात् । उद्गीथभक्तिगानमुद्गातैवेति प्राप्ते श्रौतानेव स कुर्यात् । आध्वर्यवसमाख्याते वेदे समाम्नातानामध्वर्योरेव कर्तृत्वावश्यंभावात् । आर्थेषु त्वनियमः । न च पराङावर्त्तते ऽध्वर्युरिति वचनविरोधः । तस्य प्रथमाध्वर्युपरत्वात् । इतरमन्यस्तेषामिति न्यायेनाध्वर्युगणस्यान्यतमस्य शमितृत्वेऽपि समाख्योपपत्तेः ॥

## सू० संज्ञपने च ॥ १५ ॥

हिंसारूपे संज्ञपने न हिंस्यादिति निषेधेनान्यः सौनिक एव कर्त्ता स्यादिति प्राप्ते वातं प्राणमन्ववसृजतादित्यादिमन्त्रैस्तस्यापि शमनान्तर्भावात्तदंशे समाख्याबाधायोगात्तत्राप्यध्वर्युगणस्य एव कर्त्ता स्वधिते मैनं हिंसीस्तस्माद्यज्ञवधोऽवध इत्यादिलिङ्गदर्शनेनास्य पापजनकत्वाभावात् । भाष्ये तु चतुरधिकरणीयमेकीकृत्य व्याख्याता । लिङ्गदर्शनाच्चेति चरमसूत्रं तु सर्वसाधारण्याय शृतं हविः शमितरिति प्रैषे सति शृत-

मिति त्रिः प्रत्याहेति लिङ्गशमनश्रपणयोः समानकर्तृकतां बोधयतीति व्याख्यातम् । श्रपणस्य प्रकृतावध्वर्युकर्तृकत्वादिनिश्चयादिति तदाशयः । परं त्वेष न्यायः सोमान्तर्गतपशुष्वेव । वपायागेऽध्वर्युप्रतिप्रस्थात्रोर्व्यापृतत्वेऽपि तृतीयस्याध्वर्योः सत्त्वात् । आवपाहोमाद्दुपोद्धरणविलस्य पाणिनाच्छादनस्य शमितृकर्तृकत्वाम्नानर्निर्वाहात् । निरूढादिषु त्वनायत्त्याऽन्यः शूद्रादिः शमिता स्यात् । अत एवार्धं च वैकर्तस्य क्रोमा च शमितुस्तद् ब्राह्मणाय दद्याद्यद्यब्राह्मणः स्यादिति लिङ्गात्संज्ञपनसूत्रेऽन्यपदानुकर्षेण तावन्मात्रे त्वन्य एव कर्त्तेति सुव्याख्यं याज्ञिकाद्यविरोधाय ॥

इति संकर्षे भाट्टदीपिकायां त्रयोदशाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## अथ त्रयोदशेऽध्याये द्वितीयः पादः ।

### सू० पत्नीम् ॥ १ ॥

पत्नीं संनह्याज्येनोदेहीत्यध्वर्युकर्तृकप्रैषे पत्नी-शब्दस्य प्रतिसम्बन्धिबोधमपेक्ष्य स्वार्थोपस्थापकत्वे*नार्द्धो वा एष आत्मनो यत् पत्नीत्याम्नानाद्दम्पत्योरेककारकत्वेन च गृहकर्मसु पत्न्येव निपुणा मदपेक्षयेति लौकिकवाक्य इव वक्तुर्भार्याया एव बोधादध्वर्युभार्याया एव संनहनम् । ऋत्विक्संस्कारवत्क्रतूपकारकत्वसम्भवादिति प्राप्ते संपत्नी पत्या सुकृतेन गच्छतामिति मन्त्रवर्णाद्यजमानपत्न्या एव फलभोक्तृत्वादध्वर्युवक्तृकेऽपि तस्मिन्पत्नीपदेन यजमानाया एव बोधदर्शनात्तस्या एव संस्कारः । †यस्य व्रत्येऽहन्पत्न्यनालम्भुका भवति तामपरुध्य यजेतेति लिङ्गाच्च । अध्वर्युभार्यापरोधस्य स्वभावसिद्धत्वेन पुनर्विधानायोगात् ॥

---

* तैत्तिरीयसंहितायाः षष्ठकाण्डे प्रथमप्रपाठके अष्टमानुवाके अर्द्धोवेत्यादि-

† तैत्तिरीयब्राह्मणे तृतीयकाण्डे सप्तमप्रपाठके नवमानुवाके यस्य वत्येऽहन्नित्यादिः व्रत्येऽहन्-यागानुष्ठानदिने, यस्य यजमानस्य, पत्नी, अनालम्भुका-स्पष्टुमयोग्या, रजस्वला भवति एतदीयस्य यज्ञस्य अर्द्धः-एको भागः मीयते-विनश्यति, दम्पती हि कर्म्मणः कर्तारौ तत्र स्त्रियाः कर्म्मायोग्यत्वादर्द्धहानिः तदानीं हानिपरिहाराय तां स्त्रियम् अपरुध्य-बहिर्निःसार्य्य जघनेन वेदिमन्तर्वेदिर्वादशुन्वं सन्नहनं स्तीर्त्वा यजेत इति तैत्तिरीयब्राह्मणभाष्ये सायनाचार्य्याः ॥

## सू० एवं वा ॥ २ ॥

पत्न्याः संनहनेन कृतौ* सा कुर्यादिति विधावेकत्वस्योपादेयविशेषणत्वेन विवक्षितत्वादौदुम्बरीसंमानवदेकस्यामपि विधेश्चारितार्थ्यादेकैव या काचिद्यजमानपत्नी संनह्येति प्राप्ते सर्वासामपि संनहनादिसंस्काराः कर्त्तव्याः । कर्तृत्वाविशेषात् । फलाधानांशप्रयुक्तत्वेन सन्निपातित्वाच्च । ग्रहवत्संस्कार्यत्वाविशेषेण संख्याया अविवक्षितत्वाच्च । पत्नीप्रातिपदिकस्य यज्ञस्वामिमात्रवाचित्वाच्च ॥

## सू० भूयांसि कर्माणि ॥ ३ ॥

ऐन्द्राग्नाः षड् यागाः काम्या †याज्यानुवाक्यायुगले तु द्वे एवाम्नाते तत्राद्यं युगलमाद्यस्य कर्मणोऽङ्गं निर्विवादम् । अन्यत्तु युगलं पञ्चानामपि कर्मणामङ्गम् । युगलद्वयं वा पुनः पुनरावर्त्य त्रिरनुवाकपाठे तदन्तर्गतमन्त्राणामिव दण्डकलितवद्विषमाणामेकं समानामन्यदङ्गमिति प्राप्ते समं स्यादिति न्यायेनाङ्गिनामङ्गयोश्च विभागे सत्याद्यत्रयस्याद्यमन्त्यत्रयस्यान्त्यमङ्गमिति स्वस्यानविवृद्धिः ॥

## सू० भूयांसो मन्त्राः ॥ ४ ॥

दर्शपूर्णमासयोः पुरोडाशपिण्डविभागे यथाभागं व्यावर्तेथां भगो वां विभजत्वित्यादयो बहवो मन्त्रा आम्नाताः । ते सर्वेऽपि समुच्चित्य विभजनेऽङ्गानि अन्यतमग्रहणे विनिगमनाविरहात् । एकस्य विनियोगे अन्यस्याकाङ्क्षाया अशान्तेः ॥ अनेकेषामङ्गिनामेकस्मिन्नङ्गे समुच्चयवद्विपरीत्यस्यापि न्यायतौल्येन सिद्धेरिति प्राप्ते कृतस्य प्रकाशनस्य पुनः करणासम्भवान्मन्त्राकाङ्क्षायाश्च विकल्पेन विनियोगेऽपि शान्तेस्तां चतुर्भिरादत्त इत्यादिलिङ्गाच्च विकल्पेन विनियोगः ॥

## सू० ऐन्द्रम् ॥ ५ ॥

‡सांनाय्यं प्रकृत्य श्रूयते । न‡ दारुपात्रेण दुह्यादग्निवद्धि दारुपात्रं

---

* कृतोरुपकुर्यादिति पा० ।

† पुरः पूर्वम् यागाद्देवतामनुकूलयितुं या ऋगुच्यते इति व्युत्पत्त्या पुरोनुवाक्यापदमनुवाक्यापदं च ऋग्विशेषबोधकम् ।

‡ तैत्तिरीयसंहिताया द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयानुवाके सान्नाय्यप्र-

यद्दारुपात्रेण दुह्याद्यातयाम्ना हविषा यजेताथो खल्वाहुः पुरोडाशमुखानि वैहवींषि नेत इतः पुरोडाशं हविषो यामोऽस्तीति काममेव दारुपात्रेण दुह्यादिति, अत्राग्नेयपुरोडाशोऽग्निदेवत्यः दारुणोऽन्तरानेः सत्त्वेन दारुसंबद्धपयसोऽप्यग्निसंबन्धानपायादनुचीनावाग्नेयावेव यागौ संपन्नौ । तस्य जामितापादकत्वात्तत्परिजिहीर्षया पुरोडाशमुखानि वा इति वाक्येनाग्नेयसान्नाय्ययोर्मध्ये यागान्तरं पुरोडाशद्रव्यमुपांशु याजवद्विधीयते। तस्यापि पयोद्रव्यकत्वे उक्तरीत्याऽग्निसंबन्धाज्जामितातादवस्थापत्त्या तदनुक्तिः । तुल्यन्यायेन मध्यस्थयागस्याग्निदेवताकत्वेऽपि जामितानपायात्तदितरदेवताकत्वे सिद्धे इन्द्राय त्वा जुष्टं *प्रोक्षामीति प्रकरणाम्नातमन्त्रानुत्कर्षायेन्द्र एव देवतेति नियम्यते । संप्रतिपन्नदेवताकत्वाच्च सांनाय्येन सहास्य प्रदानम् । आग्नेयोऽष्टाकपाल इति वाक्य इव विधिकल्पनाऽपि न दुष्यतीति बोधायनकल्पानुगुणे पूर्वपक्षे प्राप्ते–सिद्धान्तस्तु जातेष्टिवाक्य इवोपक्रमोपसंहारयोर्दारुपात्रकरणकदोहकीर्तनादेकवाक्यत्वम् । तत्र च दोहोद्देशेन दारुपात्रमेव विधीयते । दारुपात्रे च दोषसद्भावादयुक्ततामिवाशङ्क्याथो खल्वित्यादिना तदभावं समर्थ्य काममिति निगमनवाक्ये विधेः स्पष्टं प्रतीतेः । एवं सति मध्ये यागान्तरविधाने वाक्यभेदः स्यादेव आग्नेयवाक्ये देवतातद्धितादिना द्रव्यदेवतासंबन्धप्रती-

ब्दनिर्वचनं दर्शितं मन्त्रस्तु "इन्द्रस्य वृत्रं जघुषइन्द्रियं वीर्यं पृथिवीमनुव्यार्च्छत्तदोषधयो वीरुधोऽभवन्त्स प्रजापतिमुपाधावद्वृत्रं मे जघुषइन्द्रियं वीर्यं पृथिवीमनुव्यारत्तदोषधयोवीरुधोऽभूवन्निति स प्रजापतिः पशूनब्रवीदेतदस्मै सन्नयतेति तत्पशवओषधीभ्योऽध्यात्मन्त्समनयत्तत्प्रत्यदुहन् यत्समनयन् तत्सान्नाय्यस्य सान्नाय्यत्वं" इति । वृत्रं जघुषो हतवतः व्यार्च्छत् विविधत्वेन प्राप्नोत् । ओषधिवीरुधयोर्भेदः पूर्वाचार्यैर्दर्शितः –"ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुध"इति तदेतदिन्द्रियसामर्थ्यमोषध्यादिरूपं प्रजापतेरग्रे कथितवान् । स च प्रजापतिरेतदिन्द्रियसामर्थ्यमिन्द्रार्थं सम्यक् प्रापयतेति पशूनब्रवीत् । तत्सामर्थ्यं पशव ओषधीभ्यः सकाशादानीय स्वात्मन्यधि स्वशरीरे सम्यक् स्थापितवन्तः पुनः स्वनिष्ठं तद्वीर्यं क्षीरादिरूपमिन्द्रं प्रति दुग्धवन्तः । यस्मात्पशवः समनयन् तस्मात्सान्नाय्यनाम भवतीति सायनाचार्याः । किञ्च दधिपयसी च "पायसान्नाय्येति"सूत्रेण निपातनात्कर्मव्युत्पत्त्या सान्नाय्य पदाभिधेये ।

‡ तैत्तिरीयब्राह्मणे तृतीयकाण्डे द्वितीयप्रपाठके द्वितीयानुवाके

* स्रुक्कायामग्निहोत्रहवण्यां तिरःपवित्रमप आनीय त्रिरुत्पूय उन्मुखयवुपस्थापयत्तेन जलेन सपवित्रेणोत्तानेन दक्षिणपाणिना सेचनं पुरोडाशीयानां यत् तत्प्रोक्षणमित्युच्यते ।

त्याऽऽमिक्षावाक्य इव यागकल्पनसम्भवेऽपि द्रव्यमात्रश्रवणेन कथं तत्कल्पना। आग्नेययागस्य स्पष्टमकीर्त्तनात्कथमनूचीनताऽवगमः। उपांशुयाजे यदन्वञ्चौ पुरोडाशावन्तरा यजतीत्यादिपदश्रवणाद्वैषम्यम्। अनुत्कर्षमात्रलिप्सया देवताकल्पने पूषादिदेवताः कुतो न नियम्यन्ते। पूषानुमन्त्रणमन्त्रादेरनुत्कर्षसम्भवात्। यागान्तरकल्पनाग्रहे वा इत इतः पुरोडाशपदेनोभयतः पुरोडाशवत उपांशुयाजस्यैव परामर्शः कुतो न कृतः। बहूनब्राह्मणेनैकवाक्यत्वसम्भवात्। तस्मादर्थवादवाक्ये ऽग्निस्पृष्टदारुसंबन्धमात्रेण दोषमाशङ्क्यायातयामरूपपुरोडाशस्य प्रथमं सत्त्वात्तदुत्तरं क्रियमाणं सर्वमयातयाममेवेति परिहृत्य पश्चाद्दारुपात्रं विधीयत इत्येव युक्तमिति॥

## सू० समानतन्त्रः॥ ६॥

पौर्णमास्यङ्गभूतो वैमृधयागस्तया समानतन्त्र एव कार्यो न तत्पश्चात्। *"वैमृ†धः पूर्णमासेऽनुनिर्वाप्योभवति तेन पूर्णमासः सेन्द्र ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रेति सान्नाय्येन" तुल्यवच्छ्रुतेः। संस्थाप्येति क्त्वाश्रुतिरनुनिर्वपतीत्यनु–शब्दश्चानुवषट्कारयागादाविव प्रधानयागोत्तरकालाभिप्रायेणाप्युपपद्यत इति प्राप्ते स वै पौर्णमासेन हविषेष्ट्वाऽनुनिर्वाप्य इति वचनान्तरे पौर्णमासेनेति तृतीयानिर्देशेन‡ साङ्गप्रधानकरणकभावनानिर्देशेन प्रयोगोत्तरकालप्रतीतेः संस्था–शब्दस्यापि प्रयोगसमाप्तिपरत्वात्तत्र यच्छक्नुयात्तद्दद्यादिति दक्षिणाभेददर्शनाच्च भिन्नतन्त्र एव। तुल्यता त्विन्द्रवत्त्वमात्रेणाप्युपपद्यते॥

## सू० स नित्यः॥ ७॥

* पौर्णमास्यामनुनिर्वाप्यं वैमधं विधातुं प्रस्तौति। "इन्द्रं वृत्रं जघ्निवांसं मृधोऽभिप्रावेपन्त स एतं वैमधं पूर्णमासेऽनुनिर्वाप्यमपश्यत्तन्निरवपत्तेन वै स मृधोऽपाहत" इति। इन्द्रो वृत्रं हतवान् तमिन्द्रं मृधो वृत्रपक्षपातिनो वैरिणो ऽभितः समागत्य प्रकर्षेण भयमुत्पाद्याकम्पयन्त। विनाशिता मृधो वैरिणो येन देवेनासौ विमृत्। स देवो यस्यैकादशकपालस्य पुरोडाशस्य सोऽयं वैमधः। तं पुरोडाशं पूर्णमासयागेऽनुनिर्वाप्यं प्रधानकर्म्मणः पश्चात् निर्वापयोग्यमपश्यदिति तैत्तिरीयसंहिताया द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयानुवाके सायनाचार्य्याः।

† तैत्तिरीयसंहिताया द्वितीयकाण्डे पञ्चमप्रपाठके चतुर्थानुवाके

‡ तृतीयया साङ्गप्रधान करणकभावनानिर्देशेनेति पाठान्तरम्।

स वैमृधो निमित्तोपबन्ध*मात्रेण श्रुतत्वान्नित्य इति प्राप्ते यद्यग्रे निरुप्य नानुनिर्वपेदित्यादिना निन्दार्थवाददर्शनात्प्रारब्धस्यापरित्यागवचनबलाद् यद्येतानालभेत वायव्यस्यैव शिर उपदध्यादिति वचनात्पुरुषशीर्षाद्युपधानस्येवानित्यस्तत्प्रक्रमः ॥

## सू० अग्र—शब्दः ॥ ८ ॥

यदग्रे निरुप्येत्यस्य पौर्णमासीप्रकरणे पाठादग्र—शब्देनाधानाव्यवहितोत्तरपौर्णमास्येव ग्राह्येति प्राप्ते अग्रे कृत्वा नेदानीं कुरुत इत्यादावकरणपूर्वकालमात्रप्रत्यायकस्याग्र—शब्दस्य पौर्णमासीविशेषपरत्वे लक्षणापत्तेरग्रे निरुप्येति वाक्यस्य प्रकरणाद्बलीयस्त्वाद्यस्यां कस्यांचित्पौर्णमास्यामुपक्रम्य नोत्स्रष्टव्यम् । याज्ञिकास्तु वैमृधोऽनित्य एव । एकतन्त्र्यभिन्नतन्त्रत्वयोः परं विकल्पः ॥ एनयोर्मध्ये प्रथमपौर्णमास्यामिच्छया यः पक्षः परिगृहीतस्तमेव पक्षं यावज्जीवमवलम्बेतेत्याहुः ॥

## सू० न द्वे ॥ ९ ॥

दर्शप्रकरणे अभ्युदितेष्टौ श्रूयते । †"न द्वे यजेत यत्पूर्वया सम्प्रति यजेतोत्तरया‡च्छम्बट् कुर्याद्यदुत्तरया सम्प्रति यजेत पूर्वयाच्छम्बट् कुर्यान्नेष्टिर्भवति न यज्ञस्तदनुह्रीतमुख्यपगल्भो जायत एकामेव यजेत प्रगल्भोऽस्य जायते नादृत्य तद् द्वे एव यजेतेति" । यद्यपि यागद्वयपक्षे पौर्वापर्यानवधारणादिदोषसद्भावादेकयागपक्षस्यैव प्रगल्भता, तथाऽपि तं पक्षं प्रगल्भतरत्वाभावादनादृत्य यागद्वयमेव कुर्यादित्यर्थः । तदिदं यागद्वयमभ्युदितेष्टिदर्शेष्टिश्च । संख्यायाः सन्निहितपरामर्शित्वात् । दर्शस्य प्रकरणात्सन्निधिनाऽभ्युदितेष्टेश्चोपस्थितत्वात् । वस्तुतस्तु अस्मिन्नेव प्रकरणे शाखान्तरे द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत यः कामयेत ऋध्नुयामि-

---

* निमित्तोपबन्धमन्तरेणेति पा० ।

† तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके पञ्चमानुवाके ।

‡ छंवट् इत्यव्ययं प्रणाशवाचि यथा श्रीमद्भागवते तृतीयस्कन्धेऽष्टादशाध्याये षड्विंशे श्लोके "एषा घोरतमा सन्ध्या लोकच्छंवट्करी प्रभो । उपसर्पति सर्वात्मन् सुराणां जयमावह" त्यत्र लोकच्छंवट्करीत्यस्य लोकप्रणाशकरीत्यर्थः ।

तीति श्रुतस्य द्विरभ्यासस्य विधायकमेतद्वचनम् । अन्यथा विकृतिप्रकृत्योरकालोपक्रमपर्वावच्छिन्नजीवननिमित्तयोर्विहितत्वेन निमित्तानन्तरमेव कर्तव्यताया ज्ञातत्वेन सम्प्रति कतरत्कर्त्तव्यमित्यार्थवादिकः संशयोपन्यासो न समञ्जसः स्यात् । अभ्यासपक्षेऽमावास्यापौर्णमास्योर्मध्ये कतरा प्रथममभ्यसनीयेति सन्देग्धुं युज्यते । तस्माद् द्विरिज्यावाद इति प्राप्ते ऋद्धिकामपदाश्रवणाद्दर्शाभ्युदितेष्ट्योरेवायं वादः, अर्द्धं हविरातञ्चनाय निदध्यादिति विधानाल्लिङ्गादेव दर्शेष्टिरपि प्राप्तैवेति चेत् सत्यम्, अभ्युदितेष्टेर्देवतामात्रविकारेऽपि दर्शत्वानपायाच्चोदितं कर्म कृतमेवेति पुनर्न किमपि कार्यमित्यातञ्चनार्थमर्द्धहविः स्थापनं व्यर्थमित्याशङ्काऽपनिनीषया तच्छेषोऽयं वादः । एकामेव यजेत न द्वे इत्याशङ्कितुः पक्षं स्तुत्वाऽनूद्य दूषयति । यत्पूर्वयेति । सम्प्रति कृतेयमिष्टिर्यदि पूर्वा दर्शेष्टिरेव तदाऽस्या अकालोपक्रान्तत्वात्प्रायश्चित्तेष्टिलोपः । यदि चेयमुत्तरा प्रायश्चित्तेष्टिरेव तदा परदिने पर्वणि कर्त्तव्याया अप्यकरणाच्छम्बट्कारः । अतो द्वयोः कर्मणोर्भेदावश्यम्भावादेकामेव न द्वे इति पक्षमनादृत्य द्वे एव यजेत न केवलामभ्युदितेष्टिमिति पक्षस्यैवाश्रयणीयत्वादर्द्धमातञ्चनाय निदध्यादित्यर्थवादार्थः ॥

## सू० यत् पितृभ्यः ॥ १० ॥

*अमावास्यायां पिण्डपितृयज्ञोत्तरमेव दर्शेष्टितन्त्रं प्रक्रान्तव्यम् ।

* तैत्तिरीयसंहिताया द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयानुवाके "इन्द्रो वृत्रꣳ हत्वापरां परावत्तमगच्छदपाराधमिति मन्यमानस्तं देवताः प्रैषमैच्छन्सोऽब्रवीत्प्रजापतिर्यः प्रथमोऽनुविन्दति तस्य प्रथमं भागधेयमिति तं पितरोऽन्वविन्दन् तस्मात्पितृभ्यः पूर्वेद्युः क्रियत" इति तदर्थस्तु वृत्रवधेनासुराणामपराधं कृतवानस्मीति मन्यमान इन्द्रो भीतोऽत्यन्तं दूरमगच्छत् । तमिन्द्रं प्रति देवता आह्वानमैच्छन् । देवानां मध्ये योऽन्विष्य प्रथममिन्द्रं लभते तस्य प्रथमं भागो दीयत इति प्रजापतिना उक्ताः पितरः प्रथममिन्द्रं यस्मादलभन्त तस्मात्पितृभ्यः पूर्वेद्युः पिण्डपितृयज्ञं कुर्य्यात्, दर्शयागदेवतानाममावास्यायामारम्भः प्रतिपदि तद्यागः । पितृणां त्वमावास्यायामेव पिण्डदानं । ननु तैत्तिरीयब्राह्मणे तृतीयप्रपाठके दशमानुवाके । "इन्द्रो वृत्रꣳ हत्वा । असुरान्पराभाव्येत्यारभ्य पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते" इत्येते मन्त्राः । तदर्थस्तु । इन्द्रः पुनर्युद्धे वृत्रं हत्वा तदीयानसुरांश्च पराभूतान्कृत्वा यदमावास्यां यागदिनं प्रति स्वगृहे समागत्य

सोमयागे दर्शपौर्णमासोत्तरत्वस्येव दर्शे पितृयज्ञोत्तरत्वस्यास्मभ्यमेव प्रथमं निरुप्यतामिति पितृप्रार्थितवरदानार्थवादेनावगमितत्वात् । *यत्पितृभ्यः पूर्वेद्युः करोति पितृभ्यएव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते इति श्रुतेश्च । अत एव प्रातरग्निहोत्रं हुत्वाऽन्यमाहवनीयं प्रणयतीति विहितं प्रणयनमपि पितृयज्ञाङ्गमेव । इष्ट्यङ्गत्वेऽग्नेः परेद्युः कर्मापवर्ग एव तदपनयेन पितृयज्ञस्याग्न्यभावापत्तेः । न च निशीष्टिवद्दार्शिकप्रणयनोपकार्यत्वं पितृयज्ञस्यापूर्वत्वात् । न वैष्टिकानामिव सौमिकप्रणयनोपकार्यत्वं तस्य दर्शानङ्गत्वात् । प्रणयनस्य पितृयज्ञाङ्गत्वे तु तदपवर्गे दर्शार्थं पुनः प्रणयनसंभवात्, हुत्वेति क्त्वा-प्रत्ययस्य पूर्वकालमात्रपरत्वेनापराह्ण एव प्रणेतुमुचितत्वात् वचनादपकर्षो वा । तस्मात्पितृयज्ञं समाप्यैवान्वाधानमिति प्राप्ते पूर्वाह्णापराह्णकालविहितयोरन्वाधानपितृयज्ञयोः कालातिक्रमायोगात्प्रणयनस्यापराह्णे करणे प्रातरग्निहोत्रं हुत्वेत्यस्यानतिप्रयोजनकत्वापत्तेः पितृयज्ञस्यापूर्वत्वेऽपि दार्शिकप्रणयनेन प्रसङ्गादुपकारसिद्धेः प्रणयनविध्यनन्तरं दार्शिकानेकपदार्थविधानदर्शनेन च †अङ्गत्वस्यासंदिग्धत्वाद्दर्शन-

शुक्लप्रतिपदि ह्यमावास्या यागः क्रियते । ततः पूर्व्वेद्युः पितर आगतास्तैः पितृभिः सह यज्ञोऽपि गतः । तं पितृभिः सहावस्थितं यज्ञं देवाः स्वार्थमयाचन्त पूर्व्वमस्मदीयो यज्ञ इदानीं भवत्समीपमागतः पुनरस्मभ्यमेव यज्ञो दातव्य इति । ततः पितरस्तमदत्वा तद्दानार्थमुक्त्वोचमपेक्षितवन्तः । पूर्व्वेद्युर्दर्शदिने ऽस्मदर्थं कर्म्म कर्तव्यम् ततः प्रतिपद्यनुष्ठेयं दर्शपूर्णमासाख्यं यज्ञं दास्यामइति प्रतिजानीरन् । ततो देवैस्तथेत्यङ्गीकृते तं यज्ञं दत्तवन्तः तस्मात्पित्र्यर्थं कर्म्म पूर्व्वेद्युः पूर्व्वदिने कुर्वन्ति । तथा कृते तेन मूल्येन यज्ञं पितृभ्योनिष्क्रीय यजमानस्तमनुष्ठातुं प्रवर्त्तते । इति महता प्रञ्चेन पिण्डपितृयज्ञो विहितः, । बाढं एवं तर्हि सचाव्यप्रशंसार्थमत्र तदनुवादोऽस्तु तामेव स्तुतिं द्योतयितुममावास्यानिर्व्वचनं दर्शयति, । "सो ऽमावास्यां प्रत्यागच्छत्तं देवा अभिसमगच्छन्तामावै नोऽद्य वसु वसतीतीन्द्रो हि देवानां वसु तदमावास्याया अमावास्यत्व"मिति । तदर्थस्तु पितृभिरन्विष्य लब्धः स इन्द्र आमावास्यायां पलायनदेशात्प्रतिनिवृत्य समागतस्ते देवाः परस्परमिदमब्रुवन् । अद्य नोऽस्माकं वसु श्रेष्ठं धनमावसति सह तिष्ठति सर्व्वेषां साधारणत्वे वर्ततइत्यर्थः । किं तद्वस्विति तदुच्यते इन्द्रः खलु सर्व्वेषां देवानां वसुश्रेष्टं धनं तस्मिन्वर्तमाने सति स्वामिलाभात् । यस्माद्देवा एवमुक्तवन्तस्तस्मादमावसत्यद्येति व्युत्पत्त्या ऽऽमावास्यानाम सम्पन्नमिति सायनाचार्य्याः ।

* तैत्तिरीयब्राह्मणे प्रथमाष्टके तृतीयप्रपाठके दशमानुवाके ।

† दर्शाङ्गत्वस्येति पा॰ ।

न्वप्रक्रमोत्तरमेव स्वकाले पितृयज्ञः । पूर्वेद्युरिति वचसो वरप्रार्थनार्थवादस्य च प्रधानयागाभिप्रायेणोपपत्तेः ॥

## सू० उत्तरस्मिन् ॥ ११ ॥

यदा सिनीवाली कुहूश्चेति द्वे अपि क्रमेणाऽऽपततस्तदाऽपि पूर्वाधिकरणन्यायेन पूर्वस्मिन्नेव पर्वणि पितृयज्ञे प्राप्ते परस्मिन्नेवेत्युच्यते । यदहरेव पुरस्तान्न दृश्यते तदहर्दद्यादिति यत् पितृभ्यः पूर्वेद्युरित्यपराह्णे ददातीति वचनत्रयैकवाक्यतया लब्धस्य चन्द्रादर्शनापराह्णविशेषणद्वितयविशिष्टामावास्याकालस्तस्य तत्रैव लाभात् । चन्द्रादर्शनेऽमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीत्येकस्मिन्नेव वाक्ये विशिष्टकालविधिः प्रतीक्षाविषयतयोपादेयत्वाच्च न विशेषणयोरविवक्षेति तु भाष्ये स्थितम् । न च पूर्वदिने चन्द्रदर्शनाभावस्येव परदिनापराह्णेऽमावास्याया अभावादन्यतरपरित्यागावश्यकत्वे यत्पूर्वे द्युरिति वचनानुसारेण चन्द्रादर्शनस्यैव हानं युक्तमिति वाच्यं यां तिथिं समनुप्राप्योदयं याति दिवाकर इति स्मृत्या परदिनेऽमावास्यायाः पूर्णताक्तेः । अपराह्णे सूर्याचन्द्रमसोरतीव सन्निकर्षात् ॥

ननु पिण्डान्वाहार्यकश्राद्धं क्षीणे राजनि शस्यत इति स्मृत्यन्तरेण चन्द्रादर्शनपदस्य चन्द्रक्षयोपलक्षकत्वेन व्याख्यानाच्चन्द्रक्षयस्य चा"ष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः । अमावास्याष्टमांशे च पुनः किल भवेदणु"रिति स्मृत्या चतुर्दशीयुक्तामावास्यायामेवोपलम्भात्सिनीवाल्यामेव पितृयज्ञः, अत एव यदहस्त्वेव चन्द्रमा न दृश्यतेताममावास्यां कुर्वीतेत्यादिवचनैरन्वाधानस्यापि काले चन्द्रादर्शनस्य विशेषणत्वात्तुल्यन्यायेन परदिने तदनुष्ठाने प्रसक्ते। "पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः । पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुध." । इत्यादिनाऽऽन्वाधानपितृयज्ञश्राद्धानामेककर्तव्यताविधानादन्वाधानवाक्यस्यचन्द्रादर्शनपदं चन्द्रक्षयोपलक्षकमेवेत्युक्तं कर्मप्रदीपे इति चेत् न । "अर्वागस्तमयाद्यत्र द्वितीया तु प्रदृश्यते । तत्र यागं न कुर्वीत सर्वे देवाः पराङ्मुखाः"

इति वचनेन सायं चन्द्रदर्शनविशिष्टप्रतिपदि प्रधानयागनिषेधादुभयो-रपि चन्द्रादर्शनस्यावश्यकत्वे द्व्यहकालक्रियमाणयोरङ्गप्रधानयोस्तदसम्भवेऽङ्गगुणविरोधन्यायेनान्वाधान एव तद्बाधस्य युक्तत्वात् । अत एव "तद्व्येके दृष्ट्वोपवसन्ती"ति श्रुतिः । दृश्यमानेऽपि कदाचिदिति गोभिलश्च-पितृयज्ञस्य तु यदहरेव पुरस्तान्न पश्चाच्च दृश्यते, इति श्रुत्यन्तरेण कुह्वा-मेव विशिष्य विधानात्र स्मृत्या क्षीणचन्द्रोपलक्षकत्वेन व्याख्या युक्ता, अपि त्वमावास्यापदस्यैव सूर्याचन्द्रमसोः सन्निकर्षपरत्वं पञ्चदशाद्या-धिकरणसिद्धं सूत्रोक्तं युक्तं, न च यदहः पश्चाच्चन्द्रमा अभ्युदेति तदह-र्यजन्निमाँल्लोकानभिजयतीत्यादिश्रुतिभिश्चन्द्रदर्शनदिने यागनिषेधस्मृ-तेरपि बाधोऽस्त्विति वाच्यम् । चन्द्रदर्शनदिन प्रशस्तमपि तददर्शनात्प्र-शस्ततराद्धीनमेवेति रीत्या जर्तिल*गवेधुकस्तुतेः क्षीरविधिशेषत्ववच्चन्द्रा दर्शनदिने यागविधिशेषत्वेनाप्यस्यार्थवादस्योपपत्तेः, अमावास्याष्टमांश-प्रभृतिचन्द्रोदयस्य सत्त्वादुदितमात्रस्य लोकैरदर्शनाच्छ्रुतिस्मृत्योरविरोध इति केचित् । तस्मात्सिनीवाल्यामन्वाधानं कुह्वां यागोत्तरं पितृयज्ञः । वरदानार्थवादादिश्च पूर्णयोः पूर्वप्रतिपदो† ऽनुपपन्नः ॥

## सू० दक्षिणाग्नौ ॥ १२ ॥

पितृयज्ञे एव दक्षिणाग्नौ श्रपितस्यापि हविष आहवनीय एव होमः । गार्हपत्ये श्रपितस्यापि तथा दर्शनात् । यदाहवनीये जुहोतीति वाक्यस्य बाधे मानाभावात् दक्षिणाग्नेरेकोल्मुकं धूपाय धरतीति वच-नान्तरेण प्रणीताग्नेरपि सत्त्वात्तस्य च पशावतिप्रणीतवद्दृष्टार्थत्वाय तत्रैव वा होम इति प्राप्ते यस्मिन् श्रपयति तस्मिन् जुहोतीति वच-नेनैव सिद्धान्तः । प्रणीतस्य त्वायतनाद्बहिर्निःसारणेन ततोऽभिन्नत्वात् ।

* "जर्तिलयवाग्वा वा जुहुयाद् गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोतीति" जर्ति-लगवीधुकस्तुतिवाक्यं तत्र जर्तिल-शब्देनारण्यास्तिलाः । गवीधुकाः-आरण्यगोधूमाः, ततश्चेह यथा जर्तिलगवीधुकस्तुतेः क्षीरविधिशेषत्वं तथेत्यर्थः । केचित्तु गवेधुगिति पाठं कथयन्ति तमुमं पाठमुपेक्षिषि वैदिकसम्प्रदायविरोधात् ।

† पर्वप्रतिपदोरुपपन्नः इति पुस्तकान्तरपाठोयुक्तः ।

अत एव तस्यादृष्टार्थत्वमपि न दुष्यति * ये रूपाणि प्रतिमुञ्चमाना इति मन्त्रे तस्य रक्षोपहननार्थत्वश्रवणात् ॥

## सू० अप्यनाहिताग्निना ॥ १३ ॥

अग्निसाध्येषु दर्शपूर्णमासादिष्विव पितृयज्ञेऽप्यनाहिताग्नेर्नाधिकारः । यत्तु श्रूयते—अप्यनाहिताग्निना कार्यमेवेदं † चिन्मे कृतमिदमविशदिदं चिच्छ्क्नवाम पितरश्चिन्मावेदयन्तीति तदनाहिताऽग्निनाऽप्येतत्कर्त्तव्यं किं पुनराऽऽहिताग्निनेत्येवमर्थवादत्वेनाप्युपपन्नमिति प्राप्ते अवधारणार्थकेनापि—शब्देन कर्तव्यमेवेति स्पष्टविधिना चानाहिताग्नेरप्यधिकारावगतेरितरांश एव तत्रार्थवादः ॥

## सू० स लौकिके ॥ १४ ॥

तस्य वैश्वदेवादिवत्पचनेऽग्नौ लौ‡किकाग्नावप्यनियमेनानुष्ठाने प्राप्ते येषां त्रेताग्निसम्बन्धो नास्ति तेषां सर्वेषां कर्मणामनाहिताग्नेरौपासनाग्निसम्बन्धदर्शनादौपासनाग्नावेव पितृयज्ञः । वचनात्तु कतिपयकर्माण्यंन्यन्तरेऽपि ॥

## सू० गार्हपत्यस्थानीयम् ॥ १५ ॥

य§दन्तरिक्षमिति मन्त्रेण गार्हपत्यस्योपस्थानं पितृयज्ञे विहितम् । तच्चाहिताग्निकर्तृकात्प्रकृतितोऽनाहिताग्निकर्तृकविकृतौ प्राप्तमिति तदर्थं गार्हपत्य उत्पादनीयः । प्रकृतौ होमार्थादग्नेरुपस्थेयस्य भिन्नत्वादिति

---

* शुक्लयजुः संहितायां द्वितीयाध्याये त्रिंशत्तमर्चि ये रूपाणि प्रतिमुञ्चमाना ऽअसुराः सन्तः स्वधया चरन्तीत्यादिः ।

† वैश्वदेवादित्यचनेऽग्नौवाऽनियमेनानुष्ठाने इति पा० ।

‡ तैत्तिरीयसंहितायाः प्रथमकाण्डे अष्टमप्रपाठके चतुर्थानुवाके । अग्निर्मातस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरितायानि चकम करोतु मामनेनसमिति पृथिव्यादीन् लोकान् मनसा आजिहिंसिम हिंसितुमिच्छेम यन्मातरं पितरं वा हिंसितुमिच्छेमेति यत्तस्मात्सर्वस्मादेनसः पापाद्गार्हपत्यो मां प्रमुञ्चतु अन्यान्यपि दुरितानि यानि च मे स तेभ्योऽपि मुञ्चतु मानसमेनसं सर्वपापरहितं करोत्विति तैत्तिरीयसंहिताभाष्ये सायनाचार्य्याः ।

§ पाठस्तु यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वाजि हिंसिम इत्यादि ।

प्राप्ते संस्कारविशेषविशिष्टस्यैव गार्हपत्यत्वात्तादृशस्योत्पादने चानाहिताग्नित्वभङ्गात्प्रकृतावार्थिकस्य भेदस्य चोदकेनानतिदेशादायतनमात्रभेदेऽपि गार्हपत्यदक्षिणाग्न्योरभेदाद्यस्मिन्नेव प्रणीयते तमेवोपतिष्ठेतेति वचनाच्चातिप्रणीताग्नेरौपासनाग्नेर्वोपस्थानम् ॥

## सू० तत्र गार्हपत्य-शब्दः ॥ १६ ॥

तस्मिन्नेव मन्त्रे*ऽग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चत्विति गार्हपत्य-शब्दस्यासमवेतार्थत्वेऽपि मन्त्रानुग्रहायाविकारेण प्रयोगे होमाधिकरणत्वेन संस्कार्यत्वाद्गार्हपत्यपदमपनीयावसथ्य-पदप्रक्षेपरूप ऊहे वा प्राप्ते गार्हपत्य-शब्दमात्रं लुप्यते। तावन्मात्रस्यानन्वितवचनत्वात्। उपतिष्ठेतेत्यात्मनेपदेन मन्त्रस्य करणत्वेन प्राप्तेः प्राकृतस्य तस्य गार्हपत्यपदविनिर्मुक्तस्यैव समवेतार्थकत्वात्। अग्नेरदृष्टपुञ्जरूपस्याग्न्यन्तरेण प्रत्याम्नायाभावेन पदान्तरप्रक्षेपासम्भवात्। अत एव न देवताऽग्निक्रियमिति षाष्ठो न्यायः सङ्गच्छते॥ ईदृशपदघटितमन्त्रस्यैव लोप इति याज्ञिकपक्षः क्वाचित्कस्तु चिन्त्य एव॥

## सू० यत्पौर्णमास्याम् ॥ १७ ॥

अग्नीषोमीयेण यजेत पौर्णमासीममावास्यामभिचरन्निति प्राकरणिकं वाक्यद्वयम्। तत्र द्वितीये यजेतान्तानुषङ्गेण वैरिमरणोद्देशेनाग्नीषोमीयपुरोडाशविशिष्टधात्वर्थकरणकभावनाविधिः। तच्च प्रकरणिभ्यो भिन्नं स्वतन्त्रं वाक्येन प्रकरणबाधात्। वाक्यप्रकरणयोरविरोधाद्वा वैमृधवदङ्गं फलपदं तु सर्वकामवाक्यलभ्यानुवादः। विधाने षष्ठप्रकारापत्तेर्वाक्यभेदाच्च, अमावास्यासमुदायप्रत्याम्नायत्वेन वा समुदायफलोद्देशेन प्रकरणिन एव पुनर्विधिः। समुदायतत्फलयोरन्यतरोद्देश इतरवैयर्थ्यमिति चेत्। तर्हि दार्शिकाग्नेयदेवतोद्देशेन भ्रातृव्यवत्प्रयोगे सोमसाहित्यविधिः प्राप्ताप्राप्तविवेकेन तथा पर्यवसानादिति प्राप्ते एकप्रसरताभङ्गान्नायमपि पक्षो युक्तः। इन्द्रियकामवाक्य इव फलोद्देशेनाग्नीषोमीयं हविर्विधीयते

* एतस्यापि समानत्वात्तनुवाकः।

प्रकरणलब्धस्याऽयस्य यजिरनुवादः । स च दार्शिके समुदायमात्रे लाक्षणिकः । अमावास्या-पदस्य तात्पर्यग्राहकत्वात् । चतुर्थप्रकाराश्रयणाल्लाघवं च वाक्यगतेश्चित्रत्वादिति भाष्यमप्येवंपरमुन्नेयम् ॥

## सू० अग्नीषोमीयेण ॥ १८ ॥

प्रथमवाक्ये तु प्रकृत एवाग्नीषोमीयोयागोवेष्टिवत्पृथक्कृत्य फलाय विधीयते । द्वितीयविधिप्रकारेऽतीव लाघवात् । तथा चैन्द्रवायवाग्रतावन्नित्यकाम्योऽयमिति प्राप्ते समुदायवाचिपौर्णमासीपदवैयर्थ्यापत्तेरुक्तरीत्या चतुर्थ एव विधिप्रकारो युक्तः ॥

इति संक्षेपे भाट्टदीपिकायां त्रयोदशाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

# अथ त्रयोदशाध्याये तृतीयः पादः ।

## सू० सर्वाधिकारः ॥ १ ॥

सा*कं प्रस्थायीयेन यजेतेति श्रुतस्य कर्मनाम्नः सहप्रदाननिमित्तकत्वादाग्नेयस्य दोहयोश्च सहैव प्रदानम् । आग्नेयेन पुरोडाशेन प्रचर्याग्नीध्रे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाहेति पौर्वापर्यस्योत्पन्नशिष्टत्वेऽप्यानर्थक्याद्विकल्पो वेति प्राप्ते कुम्भीभिः साकं परतः प्रस्थानस्यैव शक्यतावच्छेदककोटिप्रवेशेन नामत्वोपपत्तावाग्नेयस्य सह प्रदाने मानाभावाद्दोहयोरेव सह प्रदानम् ॥

## सू० सह कुम्भीभिः ॥ २ ॥

स्रुचे.राग्नीध्रहस्तेऽवस्थापनपूर्वकं कुम्भीग्रहणात्तासामेव प्रदान-

---

* दधिक्षीरपूर्णाभिश्चतसृभिः कुम्भीभिर्ब्राह्मणाहृताभिः साकमध्वर्योः प्रस्थानं प्रतिस्थानं यस्मिन् यागे सोऽयं साकम्प्रस्थायीयो यागविशेषः । तैत्तिरीयसंहितायाद्वितीयकाण्डे चतुर्थप्रपाठके चतुर्थानुवाके

† सौत्रामणिप्रकरणे शुक्लयजुः संहिताय सेकोनविंशाध्याये षोडशर्चिकुम्भी सुराधानीति पदं तदर्थस्तु सुरा धीयते स्थाप्यते यस्यां सा सुराधानी कुम्भीति महीधराचार्यः । तत्रैवाध्याये सप्ताशीतितमर्चि कुम्भः सुराधानकुम्भ इत्यपि स एव ।

करणत्वं तेन मध्यमेन पलाशपर्णेन जुहोतीत्यादाविव स्रुचः प्रत्याम्नायः। भाष्ये तु सह कुम्भीभिरभिक्रामन्निति वाक्ये उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीयस्त्वात् कुम्भीनां प्रदानकरणत्वमुक्तं तत्प्रौढिमात्रं, यत्तु वाक्यं यावत्यः कुम्भ्यः स्युस्तावन्ति दारुपात्राण्युपक्लृप्तानि स्युस्तावन्तोब्राह्मणा दक्षिणत उपवीतिन उपोत्तिष्ठेयुरध्वर्योराहुतिमनुजुहुयुरिति, तत्र दारुपात्राणां करणत्वेनाश्रवणात्तदुपक्लृप्तिरदृष्टार्था। वस्तुतस्तु यत्कुम्भैर्जुहोति तन्निष्ठूर्यं दारुमयेण होतव्यमनिष्ठूर्यतताया इति कुम्भनिन्दापूर्वकं दारुमयस्य होमकरणत्वेन विधानादुपक्लृप्तानां पात्राणामितरब्राह्मणकर्तृकानुहोमेष्वेव करणत्वम्। अध्वर्युकर्तृके तु होमे कुम्भ्य एव करणं कुम्भीसंख्यातोऽधिकस्य दारुपात्रस्यानुपक्लृप्तत्वात्, कुम्भनिन्दा तु ब्राह्मणकर्तृकानुहोमपरा, तस्मात् कुम्भीभिर्दारुपात्रैश्च होतव्यमिति प्राप्ते दारुमयेण होतव्यमिति वाक्ये ब्राह्मणकर्तृकत्वादिविशेषणविशिष्टाद्देशादनु-शब्दाश्रवणाच्च, होमेऽनुहोमे च दारुपात्रमेव करणं, तावन्तो ब्राह्मणा इति त्वध्वर्युसाहित्येनाप्युपपन्नम्। तेष्वेकोऽध्वर्युर्जुहुयादन्ये ऽनुजुहुयुः। पलाशपर्णस्य तु होम एव करणत्वेन श्रवणात्स्रुक्प्रत्याम्नायत्वम्॥

## सू० विवृद्धिर्वा ॥ ३ ॥

कुम्भ्याः प्रदानकरणत्वदूर्वपक्षोत्तरमन्तरा चिन्त्यते। दोहयोर्द्वित्वेन दोहकाले कुम्भ्याधिक्याभावात्सह कुम्भीभिरिति प्रदानकाले कुम्भीबहुत्वश्रवणाद्दोहेऽन्ये कुम्भ्यौ प्रदाने चान्ये। अत एव दोहकालीनं कुम्भ्यां संस्कारान्तरविधानं संगच्छते। तयोरेव प्रदानार्थत्वे तु स्रुक्संस्कारस्यैव प्रकृतितः प्राप्तेस्तदानर्थक्यं वैकृतेन प्राकृतबाधो वा स्यात्। पात्रभेदे तु समुच्चय इति प्राप्ते सायन्दोहाभ्यां चरति प्रातर्दोहाभ्यां चरतीति वचनात्प्रतिदोहं द्वे द्वे कुम्भ्याविल्येवन्दोहकाल एव तावतां धारणार्थं कुम्भीबहुत्वं सामर्थ्यात् प्राप्तं प्रदानकाले शेषकार्यापनयार्थमनूद्यते। इदं च चतुर्णामपि दोहानां प्रातरेव प्रचार इति पक्षे, कालभेदेन प्रचारे तु प्रचयशिष्टसंख्याऽनुवादः॥

## सू० तत्र शेषाः ॥ ४ ॥

तेष्वेव शेषकार्याण्युपस्तरणाभिघारणे च कर्त्तव्यानि कुम्भीतो-दारुपात्रेषु ग्रहणसमये उपस्तरणादिसम्भवात् । सावशेषस्यैव चोदकानुग्रहाय ग्रहीतुं युक्तत्वाच्चेति प्राप्ते अभिक्रामं नाहेन्द्रायानुब्रूह्याश्रावयेन्द्रं यजेति प्रैषावित्यभिक्रमणकाल एव विधानादुपस्तरणादेः सशेषावदानस्य च कालातिक्रान्तेर्न कार्याणि ॥

## सू० सन्ततम् ॥ ५ ॥

तदिदं प्रैषत्रयं सन्ततं वक्तव्यं न विरम्य सन्ततं वसोर्धारां जुहोतीत्यादौ विरामादर्शनादिति प्राप्ते यथाकालमेव वक्तव्यं सामर्थ्यलक्षणात् लिङ्गात् । तस्य च वाक्याद्बलवत्त्वात् अभिक्रमणसमकालिकत्वं तु पुरोऽनुवाक्याप्रैषस्यैव अन्ययोस्त्वनुवादमात्रम् । सन्ततमाहेति तु समासवचनं तस्यैकशतं प्रयाजा इज्यन्त इतिवदिति मूले स्थितम् ॥

## सू० द्विरिज्या ॥ ६ ॥

दाक्षायणयज्ञस्य दर्शपूर्णमासयोरेवाभ्यासरूपगुणविकारविशिष्टत्वाद्दर्शस्येव पौर्णमास्या अप्यावृत्तिः । पौर्णमासे सन्नयेदिति वचनेन सान्नाय्यस्य पौर्णमास्याममावास्यायां च करणवत्तेषामेतमर्द्धमासं प्रसुत इति वचनेन सोमसंस्तुतस्य समस्तस्य कर्मणः कालेन सहात्यन्तसंयोगविधानेन तस्य समस्तकर्मावृत्तिमन्तरेणानुपपत्तेः । दर्शमात्रावृत्तौ च तद्विरोधादिति प्राप्ते सोमः* खलु वै सान्नाय्यमिति श्रुत्या कर्मैकदेशस्यैव सोमयागत्वेन संस्तवात्तस्यैव पौर्णमासेऽपि विधानाच्चार्द्धमासमित्यस्यापि तदेकवाक्यतया सान्नाय्यस्यैवावृत्तिः ॥

## सू० निरन्तरम् ॥ ७ ॥

अर्द्धमासमित्यत्यन्तसंयोगलक्षणद्वितीयावशादेव मासमधीते क्रोशमधीत इत्यादाविव निरन्तरमभ्यास इति प्राप्ते द्वे अमावास्ये यजेतेति

* तैत्तिरीयब्राह्मणे तृतीयकाण्डे द्वितीयप्रपाठके तृतीयानुवाके ।

द्वित्वं विधायाऽऽग्नेयोऽष्टाकपालः पौर्णमास्यामाग्नेयोऽष्टाकपाल ऐन्द्रं दधि च पूर्वस्याममावास्यायामाग्नेयोऽष्टाकपालो मैत्रावरुण्यामिक्षोत्तरस्यामिति प्रयोगद्वयस्य विवरणान्न प्रत्यहमभ्यासः पौर्णमास्यां क्रियमाणस्य सान्नाय्यस्यैव सोमाभिषवत्वेनामावास्यायां क्रियमाणाया आमिक्षाया अनूबन्ध्यात्वेन संस्तवात्तन्मध्यपतितस्य सर्वस्यापि कालस्य सुत्यारूपत्वादत्यन्तसंयोगः स्तुत्यर्थत्वादप्युपपन्नः। किञ्च त्रिंशतं वर्षाणि कर्त्तव्यत्वेन विहितयोर्दर्शपूर्णमासयोर्यद्यु वै दाक्षायणयाजी स्यात्पञ्चदशवर्षाणि यजेत त्रिंशद्याजी संपद्यत इति पञ्चदशस्वेव वर्षेषु त्रिंशत्सम्पत्तिवचनाद् द्विरेवाभ्यासः ॥

## सू० तस्य व्रतम् ॥ ८ ॥

तत्रैव तस्यैतद्व्रतमित्युपक्रम्य नानृतं वदेन्न मांसमश्नीयान्न स्त्रियमुपेयान्नास्य पल्पू*लनेन वासः पल्पूलयेयुरेतद्धि देवाः सर्वं न कुर्वन्तीति विहितानि व्रतानि प्राकृतव्रतानामेव गुणविकाररूपाणि दाक्षायणयज्ञस्यैव दर्शपूर्णमासगुणविकाररूपत्वेन तत्तदङ्गव्रतयोरपि तथात्वस्योचितत्वादिति प्राप्ते चातुर्मास्यव्रतवदमावास्येष्टिद्वयान्तरालेऽपरपक्ष एवैतद्व्रतम्, प्राकृतं तु प्रतिप्रयोगं व्रतोपायनादिव्रतविमोकान्तकालमेवेति तयोर्भेदात्। स एतमर्द्धमासं यज्ञो विततस्तस्यैतद्व्रतमित्यर्द्धमाससंयोगशिष्टत्वात्। एतत्प्रकरण एव पठितस्य ऋतौ भार्यामुपेयादिति प्रतिप्रसवस्य वैयर्थ्यापत्तेश्च ॥

## सू० आदिविकल्पः ॥ ९ ॥

ईदृशानां गुणविकाराणामैच्छिको विकल्पः प्रतिप्रयोगं स्यात् दर्शपूर्णमासनिष्ठस्य यावज्जीविकत्वस्य विकारेष्वपि प्रवृत्तेरिति प्राप्ते

* तैत्तिरीयसंहिताद्वितीयकाण्डे पञ्चमप्रपाठके पञ्चमानुवाके पल्पूलनं वस्त्रशुद्धिसाधनमूषादि तेनास्य वासो न शोधयेयुः, यस्माद्देवाः पूज्या एतत्सर्वमनृतवदनादिकं न कुर्वन्ति तस्मादयमपि न कुर्यात्। पल्पूल-धातुः प्रक्षालनच्छेदनयोरिति महीधराचार्याःशुक्लयजुःसंहितायां त्रिंशत्तमेऽध्याये द्वादश्यां कण्डिकायां प्राहुः।

प्रथमप्रयोग एवायं विकल्पः कर्मधर्मरूपाणां विकारे प्रवृत्तावपि कर्तृधर्मस्य यावज्जीविकत्वस्य तदयोगात् ॥

## सू० यूपविरोहणम् ॥ १० ॥

*यस्य यूपो विरोहति ईश्वरः पराभवितोस्त्वाष्ट्रं पशुं साण्डं छागं लोमशं पिङ्गलं बभ्रुं बहुरूपमालभेतेति विहितं छिन्नयूपेऽङ्कुररोहणनिमित्तकं कर्म विकृतावेव प्रवर्त्तते । तासां हि सुत्याविवृध्या दीर्घततित्वात् । प्रकृतौ दीक्षाकाले छिन्नस्यानुच्छ्रितस्य यूपस्याल्पेन कालेन विरोहणासंभवादिति प्राप्तेऽनुच्छ्रितस्यापि यूपस्य विरोहणसंभवात्प्रकृतावप्यविरुद्धम् । संस्कारैकदेशयुक्तपलाशेऽपि यूपपदप्रयोगादवस्थाविशेषस्य निमित्तकोटावप्रवेशात् ॥

## सू० तत्परम् ॥ ११ ॥

यदीष्ट्या यदि पशुना यदि सोमेन यजेत तात्रैवास्य पूर्वोऽग्निश्चितः स्यात्तमपरमन्ववधाय यजेतेति श्रुते तमपरमित्यनेन पुराणाग्निद्रव्यसमीपदेशो लक्ष्यते । पूर्वोऽग्निर्यथा यजनीयदेशस्यापरभागे भवेत्तादृशे देशे यजेतेत्यर्थात् । नदीमन्ववसिता सेनेत्यादौ नदीसमीपदेशभानात् । अथवा तं पुराणाग्निदेशमेवान्ववधायाश्रित्यापरं यजेत पुनर्यजेतेत्यर्थः । पुराणस्थण्डिलस्य तत्रैव सत्त्वेन तदुपर्येव यजेतेति यावत् ।

---

* तैत्तिरीयब्राह्मणे प्रथमकाण्डे चतुर्थप्रपाठके सप्तमानुवाके यूपविरोहप्रायश्चित्तप्रकरणे मंत्राः, असुर्य्यं वा एतस्माद्वर्णं कृत्वा पशवोवीर्यमपक्रामन्ति यस्य यूपो विरोहति त्वाष्ट्रं बहुरूपमालभेत् त्वष्टा वै रूपाणामीशे य एव रूपाणामीशे सोऽस्मिन् पशून् वीर्यं यच्छति=नास्मात्पशवो वीर्यमपक्रामन्ति।

तदर्थस्तु यस्य यजमानस्य यूपो विरोहणमङ्कुरान् जनयति एतस्मात् यजमानात् पशवो वीर्यमपक्रामन्ति किं कृत्वा असुर्य्यं वर्णमसुरेभ्यो हितं कृत्वा तदेनदपक्रमणं निवारयितुं त्वष्टृदेवताकं बहुवर्णोपेतं पशुमालभेत त्वष्टा हि रूपाणां स्वामी, "त्वष्टा वै पशूनां रूपकृदिति,' श्रुत्यन्तरात् अतः पशूनां त्वष्टा रूपस्वामी यजमाने तान्पशूवीर्यं च नियच्छति ततो नाक्रान् पशवो वीर्यमपक्रामन्तीति सायनाचार्य्याः तैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थप्रपाठके सप्तमानुवाके ।

+ यत्रैवास्येति तु पु० ।

वचनात्पुनर्विनियोगे आहवनीयादेरिव निरष्टिकत्वाभावात् नद्याः सजलत्वेन सेनाश्रयत्वायोग्यत्वेन तत्र तीरलक्षणायामपि प्रकृते तदभावात् । कांस्यासनकटासनयोरासनत्वाविशेषेऽपि योग्यतयैव भोज्यभोक्तृधारणे व्यवस्थयैव विनियोगदर्शनादिति प्राप्ते मध्ये चिन्ता ॥

## सू० सोमे प्रतिषेधः ॥ १२ ॥

उक्तवचने चयनोत्तरकालीनानामिष्टिपशुसोमानामविशेषेण ग्रहणात्सर्वाङ्गं पुराणाग्निद्रव्यमिति प्राप्ते पुनर्वास्तु वा एतत्क्रियते पुनर्वा एतत्प्रयान्ति यत्रैवाग्निचित्सोमेन यजेत तदेता एकविंशतिलोकम्पृणाम् उत्तरवेद्यामुपनिधाय यजेतेति वचनान्तरेण सोमे द्रव्यान्तरविधानात्सामान्यवचनेनेष्टिपशुबन्धयोरेव पुराणद्रव्यविधिः पर्यवस्यति । वस्तुतस्तु यदीष्टयेति वाक्येऽपि सोमस्य विशिष्य ग्रहणान्यथाऽनुपपत्त्योत्तरवेदिपुराणाग्निद्वयस्यैवैकविंशतिलोम्पृणानामप्यग्निचित्कर्तृकसोमे समुच्चयः सोमानन्तर्गतेष्टिपशूनां त्वेकविंशतिलोकंपृणाभाव इति स्थितादुत्तरमग्निचित्कर्तृकसोमे लोकम्पृणारूपगुणान्तरविधिरयमेव । अन्यः सर्वोऽप्यस्यैवार्थवादः । इष्टिपशु–शब्दौ च सोमप्रयोगान्तर्गतेष्टिपशुमात्रपराविति न क्वापि पुराणाग्निद्रव्यस्य पुनर्विनियोगः ॥

## सू० साग्निचित्यानाम् ॥ १३ ॥

एकविंशतिलोकम्पृणाभिरेषा पुनश्चितिः साग्निचित्यक्रतुष्वेव स्यात्तत्प्रकरणे पाठादिति प्राप्तेऽनग्निचित्येष्वेव व्यपदेशविशेषात् अग्निं चित्वा यजेत इत्यनुक्त्वा अग्निचित् सन् यः सोमेन यजेत इत्युक्त्या सोमेऽनग्निचित्यत्वस्यैव भानात् । विश्वजिति सर्वपृष्ठे ग्रहीतव्या अप्यग्निष्टोमे ग्रहीतव्या इत्यत्र व्यपदेशभेदेनैव विश्वजितोऽग्निष्टोमेतरसंस्थस्य ग्रहणात् । किंच प्रवा एषोऽस्माल्लोकात् च्यवते योऽग्निं चिनुते न वा एतस्यानिष्टकाहुतिरवकल्पते यां वा एषोऽनिष्टकामाहुतिं जुहोति स्रवति वै सा तां स्रवन्तीं यज्ञोऽनुपराभवति यज्ञं यजमानो यत्पुनश्चितिं चिनुत आहुतीनां प्रतिष्ठित्या इति वाक्यशेषेऽनिष्टकाहुतेरेव श्रवणकीर्त्तनाद-

नग्निचित्यानामेवानिष्टकत्वेनोपस्थितेरग्निचितः केवलसोमयाग एवायं गुणविधिः। इयं पुनश्चितिरप्रसवणेत्युच्यते, या तु समृद्ध्यर्था पुनश्चितिः सा पुराणाग्नावन्यत्र वेति विकल्प इत्याकारे स्थितम्॥

## सू॰ प्लाक्षम्॥ १४॥

अग्नीषोमीये पशौ प्लाक्षमुत्तरं बर्हिर्भवति समेधस्यैव पशोरवद्यतीति श्रुतं प्लाक्षशाखामयं बर्हिः संनिहिते सवनीयपशावुत्कृष्येत उत्तरपदविशेषणेन सवनीयपशोरेवोपस्थितेः यदा तिष्यावर्हिस्तदग्नीषोमीयस्येति वाक्यस्यावान्तरप्रकरणाद्बलीयस्त्वाच्च। पञ्चावत्तावरुद्धे जामदग्न्यप्रयोगेऽसंभवन्निवेशस्य प्राकरणिकस्यापि चतुरवत्तस्योत्कर्षदर्शनादिति प्राप्ते उत्तर-शब्दस्योत्तरपश्वङ्गे लक्षणापत्तेरुत्तवाक्य एव तस्यावदानाधारत्वेन विनियोगविधानाद्भिन्नकार्ययोर्बाध्यबाधकभावाभावादनुत्कर्षः॥

## सू॰ पशुपुरोडाशार्थम्॥ १५॥

सवनीयस्य पशोः क्रमेऽग्नीदग्नीन्विहरबर्हिस्तृ*णीहि पुरोडाशानलङ्कुरु पशुना देहीति प्रैषः श्रुतः। तत्र वर्हिस्तरणं पश्वर्थं पुरोडाशार्थं च। उभयोरविशेषेण संनिधानात् आकाङ्क्षितत्वाच्च, मध्यन्दिनतृतीयसवनयोरप्येवमेव प्रैषदर्शनात्तत्र च पशोरभावात्तदैकरूप्याय केवलपुरोडाशार्थमेव वेति प्राप्ते ऐष्टिकेषु प्रत्यक्षस्य वर्हिर्विधेरभावादनुपृष्ठं वर्हिस्तृणातीति सौमिकवर्हिर्विधेः सत्त्वाच्च तस्यैवायं स्तरणार्थः प्रैषः॥

## सू॰ यथाभा†गम्॥ १६॥

भूयोमन्त्राधिकरणे यथाभागं व्यावर्त्तेथामित्यादिमन्त्राणां विकल्प उक्तस्ते देवते संबोध्य विभजनं विदधति देवतानां यागसंबन्धित्वात् संसृष्टद्रव्यकत्वात्। चेतनत्वेन संबोधनार्हत्वाच्चेति प्राप्ते पिण्डावेवात्र संबोध्यौ। तयोर्देवतातोऽन्तरङ्गत्वात् स्वधित्याद्यचेतनानामपि संबोधनदर्शनात् देवताया अपि शब्दरूपत्वाच्च॥

---

* तृणाहीति पा॰।

† यथाभानमिति पुस्तकान्तरस्यपाठान्तरं तु न युक्तम्॥

## सू० एतेन ॥ १७ ॥

इदमग्नेरिदमग्नीषोमयोरिति मन्त्रयोरपि पूर्वन्यायेन पिण्डविभागार्थत्वे प्राप्ते तत्संयुत्य द्वैधं कृत्वाऽभिमृशेदिदमग्नेरित्याम्नानाद्विभक्तयोरेव देवतानिर्देशः । आग्नेयेऽग्नीषोमाभ्यामिति मन्त्रयोस्तु चतुर्थीनिर्देशादसंदिग्धं देवताऽभिधायित्वम् ॥

## सू० *पुरोडाशगणे ॥ १८ ॥

यत्र बहूनां पुरोडाशानामेकः पिण्डस्तत्रापि यथाभागं व्यावर्तेथामित्यविकृत एव मन्त्रः प्रयोक्तव्यः । विभागस्य पिण्डद्वैधीकरणार्थत्वादिति प्राप्ते व्यावर्त्तध्वं †भगो वो विभजत्वित्यादिरीत्योहेन प्रयोगः पिण्डद्वित्वेऽपि हविषां बहुत्वेन तेषां परस्परव्यावृत्तेरभिधेयत्वात् ॥

## सू० उत्तमयोः ॥ १९ ॥

अन्त्योपान्त्यपिण्डविभागेऽपि हविर्बहुत्वानपायादूहेन प्रयोगे प्राप्ते यथा प्रकृत्यविकृत एव मन्त्रः पूर्वहविषां व्यावर्त्तितत्वेन द्वयोरेव हविषोर्व्यावर्त्तनीयत्वात् ॥

## सू० सर्वत्र ॥ २० ॥

पुरोडाशगण एव देवतानिर्देशो विभागन्यायेन सर्वेषां हविषां स्यादिति प्राप्ते महतः पिण्डादेकैकस्य हविषः क्रमेण पृथक्करणाद्याग-

---

* तैत्तिरीयसंहिताया द्वितीयकाण्डे षष्ठप्रपाठके तृतीयानुवाके मन्त्राः अङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायन् तदृषयो यज्ञवास्त्वभ्यवायन् तेऽपश्यन् पुरोडाशं कूर्मं भूतꣳ सर्पन्तं तमब्रुवन्निन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति स नाध्रियत तमब्रुवन्नग्नये ध्रियस्वेति सोऽग्नयेऽध्रियत यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्यां चाच्युतो भवति सुवर्गस्य लोकस्याभिजित्यै इति अङ्गिरोनामका ऋषयः इतः भूलोकात् उत्तमाः उद्गततमाः त्वरया निर्गताः स्वर्गं प्राप्ताः तत्र स्वर्गे त ऋषयः यज्ञवास्तु यज्ञभूमिमभिलक्ष्य समागताः तस्यां भूमौ पुरोडाशाभिमानी देवः स्वशरीरमन्तर्धाय कूर्मशरीरी भूत्वा प्रकर्षेण पलायते तं दृष्ट्वा त ऋषयोऽब्रुवन् इन्द्रादीनां मध्येऽन्यमस्मै त्वा दास्यामः त्वं ध्रियस्व त्वमवतिष्ठस्वेति ततः स पुरोडाशो नातिष्ठत् अग्न्यर्थं तिष्ठेत्युक्ते स्थितवान् अतोदिनद्वयेऽप्यष्टाकपालः पुरोडाश आग्नेयः अच्युतः कर्तव्यः तेन स्वर्गाभिजयो भवतीति सायनाचार्याः ।

† भागोवेति तु पा० ।

क्रमादेव तत्तद्देवताऽवधारणस्य वृत्तत्वादन्त्योपान्त्यपिण्डयोर्मध्ये कः पिण्डः किंदेवत्य इति निर्धारणायोगाद्दृष्टार्थो देवतानिर्देशोऽपि तयोरेव ॥

## सू० चरुपुरोडाशाः ॥ २१ ॥

यत्र चर्वर्थं पुरोडाशार्थं च व्रीहिनिर्वापादितण्डुलीकरणान्तक्रिया वृत्ता तत्र तेषां तन्त्रेणा*धिपवनस्यासम्भवात्तस्मिन्नेव काले विभागः प्रसक्तः स चामन्त्रक एव कार्यः प्राकृतकालाद्भिन्नकालत्वेन मन्त्राप्रवृत्तेः । साकंप्रस्थायीये कुम्भीतो दारुपात्रेषु दोहानां ग्रहणदशायामवदानधर्माणामन्यकालत्वादेव प्रवृत्त्यभावादिति प्राप्ते ऽवदानादिप्रदानान्तैकपदार्थप्रथमावयवरूपहविर्ग्रहणस्याभिक्रमणादितः पूर्वकालिकस्य कुम्भीभिरेव वृत्तत्वाद्दारुपात्राणां होमकरणत्वनिर्वाहकस्य ग्रहणान्तरस्याप्राकृतत्वेन चतुरवदानरूपत्वाभावात्तत्तदवयवोपस्तरणादेरप्रवृत्तावपि हविर्विभागस्य समृद्ध्यर्थो पुनश्चितिः सा पुराणाग्नावन्यत्र वेति विकल्प इत्याकरे स्थितम् ॥ सामर्थ्यवशेन प्रागेव करणेऽपि प्राकृतत्वानपायात्तदङ्गमन्त्राणां च प्रधानानुसारित्वावश्यम्भावात् पाशुकप्रयाजानामन्यकालत्वेऽपि तन्मन्त्राणामिव प्रवृत्तिः ॥

## सू० एकान्ते ॥ २२ ॥

यत्र चरवः पुरोडाशाश्च व्यतिषक्तास्तत्र क्रमानुग्रहायैकैकशो विभागः कर्त्तव्य इति प्राप्ते चरूणां सर्वेषामेकः पुरोडाशानामेक इति द्वावेव राशी युगपत्कर्त्तव्यौ तन्त्रभावे क्रमविपर्यासाभावात् ॥

## सू० इदममुष्य च ॥ २३ ॥

तेष्वेव देवतानिर्देशो न कार्यः । अव्यतिषक्तेषु तेष्वनध्यवसानाभावात् । व्यतिषक्तेषु तु क्रमविरोधापत्तेरिति प्राप्ते चोदकप्राप्तस्य बाधे मानाभावादिदममुष्यामुष्य चेत्यादि रीत्या समुच्चित्य देवतानिर्देशः कर्त्तव्य एव । तदभावे कस्य राशेरधिवापः कार्य इति सन्देहापत्तेः तत्रानुष्ठाने क्रमस्यानङ्गत्वात् ॥

* पुरोडाशीयानां पेषणार्थं दृषदि स्थापनमधिवपनमित्युच्यते ।

## सू० सर्वपृष्ठायाम् ॥ २४ ॥

बहुपुरोडाशानामेक एव पिण्डोयत्र विहितस्तत्र प्रदानकाले हविर्भागस्यावश्यकत्वाच्चरुपुरोडाशाधिकरणन्यायेन तदैव विभागमन्त्रः प्रयोक्तव्य इति प्राप्ते प्रदानकालेऽप्यविभक्तानामेव हविषां प्रतिदैवतं प्रदीयमानतया हविर्विभागस्यैवाभावान्न तदङ्गमन्त्रप्रवृत्तिः ॥

इति सङ्कर्षे भाट्टदीपिकायां त्रयोदशाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

# अथ त्रयोदशाध्याये चतुर्थः पादः ॥

## सू० वाजिनेन ॥ १ ॥

चातुर्मास्येषु वाजिभ्यो वाजिनमित्यत्र तादर्थ्यचतुर्थ्या यागोत्पत्तावेव सर्वस्य वाजिनस्य यागे विनियोगेनान्यत्र पुनर्विनियोगस्य शेषात्स्विष्टकृत इत्यादाविव शेषपदाभावे स्वेच्छया कर्तुमशक्यत्वाद्वाजिनेनोपसिञ्चतीति विहितमुपसेचनं च प्रयोजकं सदन्यद्वाजिनमाक्षिपतीति प्राप्ते यागोत्पत्तौ विनियोगश्रवणेऽपि परार्थाऽऽमिक्षाऽनुनिष्पन्नस्य वाजिनस्य विनियोगाकाङ्क्षायां यागोपसेचनयोः समकालप्रवृत्तेरसंयुक्तोत्पन्नध्रौवाज्यस्येवोभयत्र विनियोगसम्भवान्न वाजिनान्तरमुत्पाद्यम् ॥

## सू० आमिक्षायाम् ॥ २ ॥

अस्ति सोम इव वाजिनस्याप्यनुवषट्कारः । स च स्विष्टकृद्रूप एव प्रधानद्रव्यप्रतिपत्तिरूपत्वात् । अत आमिक्षायां सोम इव वाजिनस्याप्यनुवषट्कारः, स च स्विष्टकृद्रूप एव प्रधानद्रव्यप्रतिपत्तिरूपत्वादत आमिक्षायागीयस्विष्टकृतं प्रत्यामनेत् । अनिज्याशेषत्वङ्गैर्योगः स्विष्टकृतमिवेति प्राप्ते वाजिनाऽनुवषट्कारस्य वाक्येन वाजिनसम्बन्धाद्वाजिनैकशेषप्रतिपत्तिरूपत्वेऽप्यामिक्षायागशेषस्य प्रतिपत्त्याकाङ्क्षाया अनिवृत्तेश्चोदकप्राप्तस्य स्विष्टकृतो न बाधः ॥

## सू० तस्य वाजिनम् ॥ ३ ॥

अनुवषट्कारस्य सौमिकानुवषट्कारवत्स्विष्टकृद्विकारत्वात्प्रकृतितः प्राप्तं सकृदवदानादि कर्तव्यमिति प्राप्ते ऽनुपदेनाव्यवहितपूर्वत्वस्य प्रतीतेर्वषट्कारमन्वन्यो वषट्कार इत्यर्थस्यावदानादिना विप्रकर्षे बाधापत्तेरवदानादिविशिष्टक्रमिकयागद्वये द्वितीयस्यानुवषट्कार इति व्यवहाराभावात्पूर्वावत्तशेषादेव यागः कार्यः, अत एव त्रयाणां हविषां स्विष्टकृतेन समवद्यतीति न्यायप्राप्तानुवादः । त्रयाणामित्यस्य सोमवाजिनधर्माणामित्यर्थः, तेषामेवोपक्रमात् ॥

## सू० विशाखत्वम् ॥ ४ ॥

मै*त्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च सन्धावन्नकाम इति प्रकृत्य श्रुते वि†शाखो यूपो भवतीति वाक्ये विशाखत्वस्य श्लक्ष्णाग्रत्वादिवददृष्टार्थत्वादग्रभागे द्वे शाखे यूपस्य सम्पाद्ये इति प्राप्ते वारुणप्रघासिकविहारद्वयवत्कार्यार्थत्वे सम्भवत्यदृष्टार्थत्वायोगात् पशुनियोजनस्थान एव शाखावान् यूपः सम्पाद्यः । अत एव द्वे ह्येते देवते समृध्या इति वाक्यशेषे देवताभेदेन यूपद्वित्वानुग्रहोक्तिः कार्यार्थत्व एव युज्यते । विशाखे यूपे त्रैता आलभ्यन्त इत्येतद्वाक्यशेषे त्रैतानां प्रथममाश्विनं कामाय मध्यम इत्यादिना शाखात्रये पशुबन्धनोक्तिरपि युज्यते ॥

---

* तैत्तिरीयसंहितायां द्वितीयकाण्डे प्रथमप्रपाठके नवमानुवाके च मन्त्राः। मैत्रं ऽ श्वेतमालभेत वारुणं ( कृष्णमपां ) चौषधीनां च संधावन्नकामो मैत्रीर्वा ओषधयो वारुणीरापोऽपां च खलु वा ओषधीनां च रसमुपजीवामो मित्रावरुणावेव स्वेन भागधेयेनोपधावति तावेवास्मा अन्नं प्रयच्छतोऽन्नाद एव भवति इति=तदर्थस्तु

संधिशब्दं कालपरत्वेन देशपरत्वेन च द्वेधा सूत्रकारो व्याख्यातवान् अपां चौषधीनां च संधाविति प्रावृषि शरत्प्रतिपत्तौ अपि चापां चौषधीनां च संधाविति ऋत्वोर्मध्ये नदीक्षेत्रयोर्मध्ये इत्यर्थः ओषधीनामुपकारत्वेन मित्रसबंधित्वं साधु प्रयोग उभयरसोपजीवनेन प्रशस्ताः । एतदेवाभिप्रेत्य संधिं प्रशंसति अपां चौषधीनां च संवालभत उभयस्यावरुध्यैइति ।

† पुनस्तत्रैव यूपस्य शाखाद्वयं विधत्ते, विशाखो यूपो भवति द्वे ह्येते देवते समृध्ये इति विविधे शाखे यस्यासौ विशाखः तदिदं सूत्रकारो दर्शयति विशाखो यूपइति यदूर्ध्वं रशनायास्तद्विशाखं यद्वोपर्युभे शाखे अष्टा श्रीसचषाले स्यातामिति सायनाचार्य्याः ।

## सू० एतेन यूपकर्म ॥ ५ ॥

शाखायामेव नियोजनाम्नानात् खले वालिवत्तस्या अयूपत्वान्न तत्र यूपधर्माः कर्तव्या इति प्राप्ते धर्माणां पशुनियोजनरूपकार्यार्थत्वात् खलेवाल्या अपि स्वरूपाविघातकाञ्जनादीनामिष्टत्वाच्च भवन्त्येव धर्माः ॥

## सू० ऊर्ध्वम् ॥ ६ ॥

रशनापरिव्याणार्थं नाभिदघ्नं स्थलमवशेष्य तदूर्ध्वमेव शाखाभेदः कार्यं इति प्राप्ते शाखास्वेव परिव्याणस्यावश्यकत्वादुपराद्बहिः कतिपयाङ्गुलोर्ध्वमेव विशाखता ॥

## सू० अग्रमध्य–शब्दौ ॥ ७ ॥

दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिंसीरिति मन्त्रस्य द्युलेखनान्तरिक्षहिंसयोरसम्भवेनासमवेतार्थत्वाच्च विशाख ऊह इति प्राप्तेऽग्रमध्य–शब्दयोरसमवेतार्थत्वाभावादग्राभ्यामित्यादिरूहः कार्य एव ॥

## सू० खहोपरम् ॥ ८ ॥

पञ्चारत्निं यूपं वृश्चति यजमानं संमितौदुम्बरीभवति नाभिदघ्नं परिव्ययतीत्यादौ यावान्भाग उपरान्तर्निखन्यते तावता सहैवैतानि परिमाणानि चतुर्हस्ता स्थूणेत्यादिवाक्येषु तथा दर्शनात् । पुरुषस्य नाभिर्यथा मध्यभागस्तथा यूपमध्यभागस्य तेन बोधाच्चेति प्राप्ते खातादूर्ध्वमेवैतानि परिमाणानि । चतुर्हस्ता स्थूणेत्यादिवाक्येषु तथा दर्शनात् पुरुषनियोजनादिकार्यार्थत्वात् । खातोपरिभाग एव नियोजनात् । परिव्याणदशायां खातस्याप्रकृतत्वेन स्वनाभिपरिमाणस्य तदूर्ध्वमेव सम्भवात् । एकविंशत्यरत्न्यादिपरिमाणान्तरपक्षे मध्यभागे परिव्याणासम्भवाच्च ॥

## सू० यजमानेन ॥ ९ ॥

पुरुषव्यक्तिभेदेनारत्नितारतम्यादनियमेन यस्य कस्याप्यरत्निर्ग्राह्यः प्रयोगप्राशुभावादिति प्राप्ते यजमानेन संमित इति वचनान्तरैकवाक्यतया तदीयारत्निभिः संमित इत्येव नियमनाच्च तथा ॥

## सू० अध्वर्योः ॥ १० ॥

व्याममात्राणि पक्षपुच्छानि भवन्तीत्यग्नौ श्रुतं तत्र कर्मण्यध्वर्योः प्रवृत्तत्वादनियमान्नियमस्य युक्तत्वाच्च तस्यैव व्यामो ग्राह्यः । शूर्पेण जुहोतीत्यत्र कर्माङ्गशूर्पस्यैव ग्रहणदर्शनादिति प्राप्ते यजमानसंमानवत्तस्यचोदितत्वादनियमः । शूर्पस्य तु तदर्थमेवासादनविधानाद्वैषम्यम् ॥

## सू० चतुरः ॥ ११ ॥

निर्वापे चतुर्मुष्टिपरिमाणस्याप्यनियमेन यस्य कस्यचिन्मुष्टौ प्राप्ते अस्माद्राशेर्मुष्टिमादत्स्वेति प्रेरितस्य चैत्रादेः स्वमुष्टिपरिमितस्यैवादानदर्शनादध्वर्योरेव मुष्टिः ॥

## सू० परिवीय ॥ १२ ॥

यूपैकादशिन्यां श्रुतम् । अग्निष्ठ ऐकादशिना रशनाः परिवीय वासयतीति अत्र रशनाभिः परिव्याणेनाग्निसमीपस्थं यूपं संस्कुर्यादित्यर्थः प्रकृतौ त्रिवृता यूपं परिवीयेति श्रवणात् । अत एव वैकृतवाक्ये द्वितीयासप्तम्यौ सक्तूनितिवत्तत्र जयानितिवच्च गुणप्रधानतापरे । परिवीयेति च प्रकृतिलिङ्गसंयोगात्प्राकृतपरिव्याणनिवृत्तिः । परिधौ पशुं नियुञ्जीतेति वचनेन यूपनिवृत्तेर्दर्शनादिति प्राप्ते मध्ये चिन्ता ॥

## सू० तासामेकाम् ॥ १३ ॥

नाभिदघ्नस्थले सर्वासां परिव्याणासम्भवे नैकामेव तत्र परिवीयान्याभिर्यथाऽवकाशं परिव्याणम् । अथवा प्रकृतावपि रशनाद्वयस्य परिव्याणायाप्यपर्याप्त एव नाभिदघ्नभाग इति तं देशमन्तर्भाव्यैव परिवीयते । अतोविकृतावपि सर्वाभिर्युगपदेव नाभिदघ्नं परितः परिव्याणमिति प्राप्ते पुनर्मध्ये चिन्ता ॥

## सू० एतेनैकादशिन्याम् ॥ १४ ॥

वैकृतद्वैरशन्येऽप्येकां विहितस्थले परिवीयेतरा यथाऽवकाशमिति प्राप्ते युगपदुभाभ्यां परिव्याणं प्रकृतिवत् ॥

## सू० स्थितादुत्तरम् ॥ १५ ॥

एकादशभीरशनायुगैर्युगपत्परिव्याणे तासां पुनरुपादानवेलायां युगपदेव मोक्षप्रसङ्गः। तथा च पत्नयूपपरिव्याणार्थरशनादानक्रमलोपापत्तिः। अग्निष्ठाद्वे द्वे रशने आदायैकैकं पत्नयूपं द्वाभ्यां द्वाभ्यां परिव्ययतीति पृथगग्निष्ठापादानकोप*दानश्रुतेः। तस्माद् द्वाभ्यां द्वाभ्यामेकादशकृत्वोऽग्निष्ठः परिवीयेत ॥

## सू० तन्त्रं यूपमन्त्रः ॥ १६ ॥

युवा सुवासा इति हौत्रो मन्त्र एकादशवारं प्रयोक्तव्यः प्रतिप्रधानप्रतिप्रधानं गुणावृत्तेरिति प्राप्ते क्रियमाणानुवादिमन्त्रस्यादृष्टार्थत्वेनागृह्यमाणविशेषत्वात्तन्त्रतैव। प्रति प्रधानमिति न्यायस्तु परिवीरसीत्याध्वर्यवमन्त्रपरः। तस्य करणत्वेन दृष्टार्थत्वात् ॥

## सू० आद्यस्थितादुत्तरम् ॥ १७ ॥

परिवीय वासयतीति श्रवणादग्निष्ठाधिकरणकेन परिव्याणकरणेन वासनेन रशनाः संस्कुर्यादित्येवार्थः। विभक्तिव्यत्यासस्य वासयतिपदवैयर्थ्यस्य चायुक्तत्वात्। अथ यदग्निष्ठादधिरशना विह्रियन्ते तेन सर्वेऽग्निष्ठा इति वचनेऽग्निष्ठवाससंस्कृतरशनासम्बन्धेन पत्नयूपानाममप्यग्निष्ठतासम्पत्तिकथनेन रशनासंस्कारत्वावगमाच्च। रशनासंस्कारके वासे गुणविधायकस्य परिवीयेत्यस्य धर्मग्रहणासमर्थत्वेन कालभेदेन च प्राकृतपरिव्याणानिवृत्तेः ॥

## सू० ऐकादशिनान् ॥ १८ ॥

साग्निचित्ये विकृतिक्रतौ श्रुतम्। स्वर्गाय वा एष लोकाय चीयते यदग्निर्वज्र एकादशिनी यदग्नावेकादशिनीं मिनुयाद्वज्रेणैवैनं स्व†र्गाल्लोकादन्तर्दध्याद्यन्नमिनुत्यात्स्वरुभिः पशून्व्यर्धयेदेकयूपं मिनोति नैनं वज्रेण स्वर्गाल्लोकादन्तर्दधाति न स्वरुभिः पशून्व्यर्धयतीति। अत्र

* अग्निष्ठापादानकोपादानेति पा०।

† सुवर्गादिति पा०।

प्रकृतितो यूपैकादशिन्या एकयूपस्य च पक्षतः प्राप्तौ यद्येकयूपो नियम्यते तर्हि पाशुकजाघनीवाक्यन्यायेनैवेतरनिवृत्तिसिद्धेरैकादशिनप्रतिषेधो व्यर्थः स्यात्। अतः पशुनियोजनात्तिप्तकाष्ठसंमानस्यैकयूपमित्यनुवादः, अनुवादे च गौणी न दोषः। प्रतिषेधश्च यूपसामान्यस्यैव। अप्राकृतो वा यूपो विधीयत इति न यूपशरीरघटकातिरिक्ता धर्मा भवन्तीति प्राप्ते यदग्नावित्यंशेन निषेधस्यैव यत्र मिनुयादित्यंशेन विधेरपि प्रतीतेर्भावाभावयोश्चैकस्मिन्प्रयोगेऽसम्भवात्तदुभयसमाधित्सयैव प्रवर्त्तमानो विधिस्तानेव यूपानुद्दिश्य संख्यामात्रं विकृतं विदधाति। एकां सामिधेनीमन्वाहेतिवत्। अत एव नैनमिति वाक्यद्वये नोभयसमाधिर्युज्यते॥

## सू० तेषाम्॥ १९॥

ते चैकादश यूपाः औपवसथ्येऽहन्येव संमीयेरन् प्रकृतिवदिति प्राप्तेऽङ्गानां प्रधानकालत्वात्सद्यः सुत्यायामेव तेषां समानम्। प्रकृतौ पशुत्रयस्य तन्त्रभूतो यूपोऽग्नीषोमीयपश्वर्थत्वेन पूर्वेद्युः संमितोऽप्यर्थवशेनान्ये यूपाः परेद्युरेव संमातव्याः। औपभृताष्टगृहीतस्य प्रकृतावेकपात्रत्वेऽपि पशावर्थवशेनैव पात्रविभागदर्शनात्। अत एवाग्निष्ठमेतदहरुच्छ्रयेदुरग्निष्ठे हि तदहरालभ्यमानो भवतीत्यादिना मध्यस्थयूपस्यैवोच्छ्रयणो दैवपश्वालम्भं हेतूकृत्य तेन सहान्येषां दशानां कृतेऽप्युच्छ्रयणे तत्तत्संस्काराणां परेद्यवि प्रधानकाल एव करिष्यमाणतया तनुच्छ्रितानशना इव मुषित इवोत्तिष्ठेयुरिति निन्दाऽऽम्नानं सङ्गच्छते॥

## सू० सद्यः संमानम्॥ २०॥

सेयमेकादशिनी येषां पूर्वेद्युरेव संमातव्यत्वेनाम्नाता तेषामहर्गणेऽन्यकालत्वात्तन्त्रेणोपकारकत्वेऽपि सुत्याकालिकसंमानस्य प्रधानभेदात्प्रतीष्ट्याहवनीयसंमार्जनवदावृत्तिः स्यादिति प्राप्ते प्रकृतौ सर्वपशुसाधारणस्य छेदनादेरन्यकालत्वेन संमानस्यापि छेदनकाल एव प्राप्तौ वचनात्पशुकाले तावन्मात्रस्योत्कर्षेऽपि न तन्त्रता छेदनादेरिव विरुध्यते। विकृतावपि तथैवोत्कृष्टं संमानं तन्त्रमेव॥

## सू० एतेन सवनीय ॥ २१ ॥

अग्नीषोमीयरशनाया अन्यकालत्वादहर्गणे तन्त्रेणोपकारकत्वेऽपि सवनीयकालात् तु कर्मकालत्वात् प्रत्यहमावर्तेत यूपस्य सकृत् पशुकाले निखातस्य पुनर्निखननासम्भवेऽपि रशनाभिः प्रतिदिनमेकैकया परिव्याणसम्भवादिति प्राप्ते यूपाङ्गस्य परिव्याणस्यापि पूर्वाधिकरणन्यायेन छेदनकालिकस्य पशुकाल उत्कर्षेऽपि तन्त्रताऽनपायाच्च रशनाभेदे प्रमाणमस्ति । तेनाग्निष्ठरशनें पत्नयूपरशनाश्च तन्त्रेणैवोपकुर्वन्ति ॥

## सू० अग्रेण ॥ २२ ॥

अर्द्धमन्तर्वेद्यर्द्धं वहिर्वेदीति लक्षितस्य देशस्याग्निष्ठेन यूपेनाक्रान्तत्वादन्ये दश यूपा अनियमेन यत्र क्वापि निखेयाः । पुरस्तान्मिनोतीति वचनाद्वाऽग्निष्ठात्प्राग्देशे प्राक्संस्थक्रमेण संमातव्या इति प्राप्ते उदग्दक्षिणाविस्तृताया वेदेः प्रान्तेऽपि लक्षितदेशस्यानपायात्तिरश्चीर्मिनोतीत्याहत्य विधानाच्चाग्निष्ठोदग्दक्षिणपार्श्वयोरेव मातव्याः सर्वेषामपि वेदिप्राग्भागवर्त्तित्वात्पुरस्तान्मिनोतीत्यप्यविरुद्धम् ॥

## सू० तेषामन्तराले ॥ २३ ॥

यूपानामन्तरालभागदशङ्के समपरिमाणतायाः समं स्यादिति न्यायेन लाभेऽपि परिमाणविशेषे प्रमाणाभावादनियमे प्राप्ते रथाक्षेण विमिमीत इत्यस्यान्तरालपरतयैव सार्थक्याद्रथाक्षमात्राणि यूपान्तरालानि कार्याणीति ।

## सू० तया वेदिसंमिताम् ॥ २४ ॥

तुल्यन्यायेन वेदिसंमितां विमिनोतीति वचनान्तरस्याप्यन्तरालपरत्वावश्यम्भावादुभयोः परिमाणयोर्विकल्प इति प्राप्ते यूपोपराणां यावन्तस्तिर्यग्देशास्तावद्भागैर्वेदिरभिवर्धनीयेत्यभिप्रायेण वचनान्तरस्योपपत्तेर्विरोधाभावादविकल्पः ॥

## सू० यथापूर्वम् ॥ २५ ॥

यूपेषूदगपवर्गत्वविधानाद्वेदेराग्नेयकोणमारभ्येशानान्ता यूपा अग्निष्ठेतरे दश संमातव्याः। यद्वा अग्निष्ठाधारदेशस्य मुख्यस्येतरेष्वसंभवेऽपि तत्समीपवर्त्तिदेशपरित्यागे मानाभावात्तदासन्नदेशस्य प्रधानपशुक्रमेणोपस्थितस्याविरोधाय द्वितीयं यूपमग्निष्ठाद्दक्षिणतो मीत्वा तृतीयमग्निष्ठादुत्तरतो मिनुयात्। एवं चतुर्थपञ्चमादियुगलानि दक्षिणोत्तरयोर्मातव्यानि। उदगपवर्गा यूपा भवन्तीति वचनस्यैवमप्युपपत्तेः। एतेन यदाग्नेयश्च बार्हस्पत्यश्च सौम्यमभितो भवत इति लिङ्गमप्युपपद्यत इति प्राप्ते दक्षिणापवर्गाः पशवो भवन्तीत्याहत्य विधानेनेशानाद्याग्नेयान्तक्रमेण पशुनियोजने सिद्धे तदङ्गेषु यूपेष्वपि प्रधानसन्निकर्षलाभेन तथैव सम्माने प्रसक्ते प्रवर्त्तमान उदगपवर्गत्वविधिः सम्भवत्सन्निकर्षाविरोधेनैव नेतव्यः। तथा च पशुक्रमेणैव नव यूपा नीत्वा दशमस्य स्थानमतिक्रम्य वेद्यग्निकोणे दशमं मीत्वा तदुदग्भागे एकादशं मिनुयात्। एवं सति द्वयोरेवोत्तमोपोत्तमयोः क्रमोपरोधः स्यादिति भाष्यकारः। यद्यपि यूपसम्मा[1]नोत्तरमेव पशुनियोजनप्रवृत्तेरुदगपवर्गमाग्नेयादीशानान्तक्रमेणैव यूपेषु कृत्वा पशून् यूपक्रमेणैव नव नियुज्य दशमैकादशयोर्व्यत्यासेन नियोजनमपि सम्भवति तथाऽपि दशमोऽग्निष्ठादित्यादिलिङ्गदर्शनानुगुण्यात्तथोक्तम्। तदिदं लिङ्गदर्शनं न्यायेनापोद्बलितमेतद्विरुद्धवचनाद्बलीयः सत्प्रकृतौ निविशते, इतरत्तु विकृत्यर्थम्, । आचार्यस्तु वाचनिकत्वाविशेषाद्विकल्प एव प्रकृतौ स्वीकृतः ॥

## सू० उपरसंमिताम् ॥ २६ ॥

उपरसंमितां मिनुयात्पितृलोककामस्य मध्येन संमितां रशनसंमितां च मनुष्यलोककामस्य चषालसंमितामिन्द्रियकामस्येत्यादिभिर्वचनैः कामनाभेदेनैकादशानामुपरादीनां विधीयमानं साम्यं परस्परप्रायपाठादेकविधमेव स्यादिति प्राप्ते वचनसार्थक्याय प्रायपाठमनादृत्याऽप्यन्योन्यविलक्षणमेव स्वीकार्यं यूपपरिमाणतुर्यांशेन दैर्घ्यमुपरस्य विहितमस्ति ।

---

१ यूपसमानोत्तरमेवेति पा० ।

यूपस्य त्वेकादित्रयस्त्रिंशदरत्नयो विकल्पिताः। तेन तद्भेदेनोपराणां परिमाणवैषम्ये प्राप्ते दैर्घ्येण साम्यं फलाय विधीयते न तिर्यक्त्वेन। अवटान्तर्निखेयो यूपाधोभाग उपरम्। तस्य ह्यतृणमुपरं भवतीति तत्तृणनिषेधेन तदसम्भवात्। मध्यभागस्य त्रिव्यायामरशनावेष्टनपरिमितत्वेन दैर्घ्यतए कल्प्यस्य सत्त्वादेव तस्य रशनया पृथुत्वेनैव साम्यविधिः। एवं चषालेऽपि॥

## सू० व्यत्यस्तपशु॥ २७॥

आग्नेयसारस्वतसौम्यपौष्णबार्हस्पत्यवैश्वदेवेन्द्रमारुतैन्द्राग्नसावित्रवारुणानेकादश पशून्विधाय यामिमां प्रजा आपद्य चरन्ति सा वा एषैकादशिनीत्युक्त्वा ततो व्यत्यस्तपशून्नक्रम्याग्नेयमग्निष्ठेऽभित ऐन्द्रमैन्द्राग्नं सारस्वतं सावित्रं सौम्यं वैश्वदेवं पौष्णं मारुतं बार्हस्पत्यं वारुणं च विधाय श्रुतं तामेतां कापेया विदुस्तामेतामतिरात्रचरम आलभेतेति। अत्रातिरात्रचरमशब्दोऽहीनपरः। तस्यान्यतरतोऽतिरात्रत्वात्। न तूभयतोऽतिरात्रसत्रपरः। द्विविधामेकादशिनीं प्रकृत्य तामेतामित्याम्नानादुभयोरप्यहीन उत्कर्ष इति प्राप्ते यामिमामित्यनेन प्रकृतिगामितया बहुकर्तृकत्वेन पूर्वस्या निर्देशादुत्तरस्याश्च कापेयपदेन कतिपयसंमतत्वकथनेन तामेतामित्यनेनापि संनिहिताया एव परामर्शात्कापेय्या एवाहीनेषूत्कर्षः। यत्तु कल्पसूत्रमाग्नेयमभित ऐन्द्राविति तदैन्द्राग्नोभयस्य नामैकदेशमेलनेन निर्देशकमित्यविरुद्धम्॥

इति श्रीसंकर्षे भाट्टदीपिकायां त्रयोदशाध्यायस्य चतुर्थः पादः॥ ४॥
अयं च यूपपाद इत्युच्यते। त्रयोदशाध्यायश्च समाप्तः॥

---

## अथ चतुर्दशाध्यायस्य प्रथमः पादः।

## सू० इष्टकाभिः॥ १॥

अग्निचयनसाधनीभूता इष्टकाधातुमय्यो मृन्मय्यो वाऽनियमेनोपादेयाः। इष्टका-शब्दस्य घटादिपदवज्जातिवचनत्वे वा वेदिपदवदा-

कृतिवचनत्वे वोभयत्रापि प्रयोगदर्शनात् । प्रवृत्तिनिमित्तस्य धातुमयी-ष्वप्यविशिष्टत्वादिति प्राप्ते यन्मृच्चापश्चाग्नेरनाद्यमथ कस्मान्मृदा चाद्भि-श्चाग्निश्चीयत इति वाक्यशेषान्निर्मन्थ्येनेष्टकाः पचन्तीति विहितपाक-स्यादृष्टार्थत्वापत्तेश्च मृन्मय्य एव । यत्तु मूले इष्टका—शब्दस्य जातिव-चनत्वं निरस्याकृतिवचनत्वं तदर्थसंशयान्तरं प्रदर्श्य साधितं तत्रातीवो-पयुक्तमयुक्तं चेत्युपेक्षितम् ॥

## सू० अश्रिमत्यः ॥ २ ॥

इष्टकात्वाविशेषात् प्रयोगप्राशुभावायानियतसंस्थानवत्त्वे तासां प्राप्ते इष्टकानां चितिनिर्वृत्तिरूपकार्यप्रयुक्तत्वेन स्वरूपार्थत्वाभावादश्रि-मन्तरेण तदयोगात्साश्रिका एव भवेयुः । चतुरश्रा भवतीति त्वाश्रि-प्ताश्युद्देशेन गुणमात्रविधिः ॥

## सू० समचतुरश्राः ॥ ३ ॥

चतुष्ट्वसङ्ख्याविधेरविरोधाद्दीर्घचतुरश्रसमचतुरश्रयोर्विकल्पे प्राप्त दीर्घादिपदान्तरसमभिव्याहाराभावे समचतुरश्रस्यैव बोधादश्रिपरिमाण-चतुष्कस्य समं स्यादिति न्यायेन साम्यमेव ॥

## सू० अमृन्मयीनाम् ॥ ४ ॥

पशुशीर्षाद्युपधाने यदन्तरालमुत्पद्यते तत्पूरणार्थमपि कतिपया इष्टका निर्मातव्याः । इष्टकाभिरिति तृतीयाश्रुत्या चयनं प्रति निरपे-क्षकारणत्वावगमात् । तासां परस्परसम्बन्धमन्तरेण नैरपेक्ष्यायोगादिति प्राप्ते निरन्तरालेष्टकासम्बन्धस्यासम्भवात्सिकतापूरणविधिबलाच्चावर्ज-नीयकिञ्चिदन्तरालस्येव वाचनिकामृन्मयवस्तुकृतान्तरालस्यापि सोढ-व्यतया मृत्पाषाणकाष्ठाद्यन्तरालसद्भावेऽपि चितः प्रासाद इति इति प्रयोगदर्शनान्न पशुशीर्षादिस्थले इष्टका निधेयाः ।

## सू० वर्णपृथक्त्वम् ॥ ५ ॥

सर्वान्वर्णानिष्टकानां कुर्यादिति श्रुतौ वर्ण-शब्दः श्वेतादिरूपपर एव । अन्यसमवेतरूपाणामन्यत्र कर्त्तुमशक्यत्वादेव तादृशवर्णसमवायिसुधागैरिकादिद्रव्यलेप आक्षेपलभ्यः, न तु वर्णशब्द एव तत्परः शब्दसंयोगादिति सूत्रस्वरसात् । रेखासामान्ये वर्ण-शब्दस्य शक्तिनिरूढ्योरभावात् । वर्णं तु चाक्षर इति कोशेन नपुंसकत्वापत्तेश्चेति प्राप्ते, ऋजुरेखाः पश्चाच्च पुरस्ताच्च व्यालिखिता मध्य इत्यन्तेन नानारेखावतीनामिष्टकानां देशविशेषविधानोत्तरं सर्वान्वर्णानित्यस्य पाठेन सर्ववर्णशब्दस्य पूर्वप्रक्रान्तरविविधरेखापरत्वावसायात्सति तात्पर्यग्रहे तदनुपपत्त्या लक्षणाया अपि न्याय्यतया यावद्विशेषाणां विनियोगविधिभिरेव सर्वरेखाक्षेपे सति तदनुवादके वाक्ये तस्या अदोषत्वाच्चोक्तकोशे च-कारेण पुँल्लिङ्गपदस्याप्यनुकर्षाद्रेखापर एव ॥

## सू० तासां पाके ॥ ६ ॥

आमपक्कसाधारण्येनेष्टकापदप्रयोगात् पक्वेष्टकचितः प्रासाद इत्यादि प्रयोगेषु पदान्तरसमभिव्याहारेणैव पक्वताप्रतीतेरनियमे नैर्ऋतीः कृष्णास्तुषपक्वा भवन्तीति कतिपयासु पाकविधानादितरा आमा एवेति वा प्राप्ते न कृष्णां न लक्ष्मणामुपदध्यादिति निषेधबलादेवोक्ते सर्वासां पाके कतिपयानां पाके तुषाणां साधनत्वमात्रनियमविधिपरत्वे लाघवादग्निनेष्टकाः पचन्तीति शाखान्तरे श्रवणाच्च पक्वा एव ॥

## सू० स वैहारिकः ॥ ७ ॥

तासां वैदिकेनाग्निनैव पाकः कर्त्तव्यः । प्रकरणान्तर्विहितेषु हविःश्रपणादिषु तस्यैव कर्माङ्गत्वेन करणत्वादिति प्राप्ते आहवनीये गार्हपत्ये वा हवींषि श्रपयतीत्याहत्य विधानेन वैहारिकस्य पाककरणत्वेऽपि प्रकृतेऽग्निनेति पदस्य लौकिकपरत्वमेव वाच्यम् अन्यथा तदुपादनवैयर्थ्यापत्तेः । विहाराद्बहिर्नयनस्य वचनमन्तरेण कृतौ लौकिकत्वावश्यम्भावाच्च तृणारणिमणिजन्यानामनियमेन प्राप्तौ शाखान्तरे निर्मन्थ्येनेष्टकाः पचन्तीति नियमार्थो विधिः ॥

## सू० मृन्मयीनाम् ॥ ८ ॥

इष्टकासंस्काराणामिष्टकाकार्यार्थत्वेऽपि द्वारांशे नियमविधेराव-श्यकतया चमसाधिकरणन्यायेनेष्टकात्वस्याविवक्षाभावाद्दूर्वाघृतादिष्वा-कृतेरभावेनेष्टकात्वजातेरभावान्न तेष्विष्टकाधर्मा इति प्राप्ते दूर्वेष्टका उपदधाति घृतेष्टका उपदधातीत्यादाविष्टका-शब्दप्रयोगस्य तद्धर्मप्राप्ते-कफलकत्वात् सहस्रेष्टकमग्निं चिनुत इति विहितसंख्याघटकत्वाच्च भवे-युरमृन्मयीष्वपीष्टकाधर्माः ॥

## सू० सिकतातासु ॥ ९ ॥

सिकतानामपि स्थलनिर्वर्त्तकत्वाविशेषादिष्टका-शब्दप्रयोगाच्च संख्यान्तर्गत्यवश्यम्भावेन तया देवतयेति मन्त्रेणैवोपधानं भवेदिति प्राप्ते तासामपरिमिताभिः सिकताभिः पूरयतीत्यपरिमितविशेषणेन सहस्र-संख्यावहिर्भावाच्चतुर्धाकरणे दक्षिणाशब्दस्येव तास्विष्टकाशब्दप्रयोगस्य स्तुत्यर्थत्वान्न मन्त्रः ॥

## सू० चरुसर्वौषधम् ॥ १० ॥

रौद्रं गावीधुकं चरुमेतेन यजुषा चरमायामिष्टकायां निदध्यात्स-र्वौषधं वपतीति विहितयोश्चरुसर्वौषधयोरपि स्थलनिर्वर्तकत्वाविशेषा-दिष्टकाधर्माः कर्तव्या इति प्राप्तेऽनारब्ध एव स्थण्डिले सर्वौषधवपनस्य समाप्ते च चरुनिधानस्य क्रियमाणतया तत्कार्यापत्त्यभावाच्च तद्धर्माः ॥

## सू० नैर्ऋतेष्टके ॥ ११ ॥

नैर्ऋती रक्ता उपदधातीति विहितोपधानार्थत्वेनेष्टकाधर्माणां नैर्ऋतेष्वपि प्रवृत्तिरिति प्राप्ते नैर्ऋतेष्टकासन्धावुख्याधारशिक्यप्रक्षेपवि-धानेन तत्प्रतिपत्तिमात्रार्थत्वेन स्थण्डिलनिर्वर्तकत्वाभावेनोपदधातेर्गौण-त्वेन न मुख्यधर्माणां तत्र प्रसक्तिः ॥

## सू० सहस्रम् ॥ १२ ॥

सहस्रं चिन्वीत प्रथमं चिन्वान इत्यादिवाक्येषु सहस्रादिशब्दाः सहस्रदक्षिणक्रतुपराः सहस्रेण इजान इत्यादौ क्रतुषु सहस्रपदप्रयोगदर्शनादिति प्राप्ते सहस्रपदस्य चिनोतिधातुविशेषणत्वावगमात्सहस्रदक्षिणक्रतौ प्राथमिकं चयनं कुर्यादिति व्याख्याने लक्षणापत्तेर्जानुदघ्नं चिन्वीतेत्यादाविव स्थण्डिलस्यैव सहस्रत्वम् ॥

## सू० दक्षिणाभिः ॥ १३ ॥

स्थण्डिलेऽपि यत्सहस्रत्वं तदपि चयनदक्षिणाद्वारेणैव । साक्षात्संख्यान्वये जानुदघ्नत्वविरोधात् उत्तरवेदिपरिमितस्थले स्थण्डिलबहुत्वस्यासम्भवाच्चेति प्राप्ते सहस्रस्तम्भघटितेऽपि सहस्रमण्डपपदप्रयोगादवयवावयविनोरभेदादर्द्धपिप्पलीपदयोः सामानाधिकरण्यदर्शनात्सहस्रेष्टकैरेव सहस्रत्वम् ॥

## सू० सहस्रे ॥ १४ ॥

सहस्रस्य प्रमा असीति मन्त्रस्य प्रकरणाद् द्वित्रिसहस्रेष्टकचितिष्वपि प्राप्तमङ्गत्वं मन्त्रलिङ्गेन सहस्रेष्टक एव सङ्कोच्यत इति नान्यत्र तत्प्रयोग इति प्राप्ते सहस्रपदस्य स्तुत्यर्थत्वेन गुणवादेनाप्यनेकपरतयोपपत्तेर्लिङ्गप्रकरणयोरविरोधात्सर्वचित्यङ्गं मन्त्रः ॥

## सू० सहस्रेष्टकम् ॥ १५ ॥

लोकं पृण छिद्रं पृणेति मन्त्रमेव सहस्रवारमावर्त्य सर्वा इष्टका उपधेयाः । तदितरेषां नानाविधमन्त्राणां बाहुल्यादिति प्राप्ते सर्वैरेव मन्त्रैरुपधेयाः । ये त्वधिका मन्त्रास्ते प्रयोगान्तरे उपयोक्ष्यन्ते चतुर्दशभिर्वपतीत्यादिवत् ॥

## सू० इष्टकाविवृद्धौ ॥ १६ ॥

यस्यां चितौ ये मन्त्राः प्रक्रान्तास्तैरेव मन्त्रैरावृत्तैः सा सा चितिः पूरणीयेति प्राप्ते यदेवास्योनं यच्छिद्रं तदेतया पूरयतीति वचनेन लोकम्पृणाया ऋच एव न्यूनपूरणे विनियोगात्प्रक्रान्तानियतसंख्याकमन्त्रसमा-

प्तावशिष्टा इष्टकालोकम्पृणामध्येनैवोपधेयाः पुनःपुनरावर्त्यमानत्वादे-वायातयाम्नीलोकम्पृणेति स्तुतिरुपपद्यते ॥

## सू० चितिशब्दः ॥ १७ ॥

पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहतीत्यत्र कर्मणि क्तिन्न-न्तेन चितिशब्देनैकैकः प्रस्तार उच्यते। प्रासादादौ स्थपतीनामेका चितिरद्य निर्वृत्तेति व्यवहारदर्शनात्। अत एव न चयनक्रियोच्यते।

## सू० तस्या एकत्वाच्च ॥ १८ ॥

अग्निं चिनुत इति विधेरभ्यासाद्यभावात्। प्रस्तारपञ्चकविधा-नादेव पुष्करपर्णरुक्मपुरुषस्वयमातृणानां क्वचन निवेशे प्रसक्ते तेषां पूर्वपू-र्वोपर्युत्तरोत्तरविधानं वाचनिकं सङ्गच्छत इति तैः सह नव प्रस्तारा इति प्राप्ते चयनक्रियाया एकत्वेऽपि पुरीषव्यवधानकृतभेदेन तदवयवानां पञ्चधा विभागसम्भवात्कर्मैकदेशपरश्चिति-शब्दः। अत एव स्वयमा-तृणां च विकर्णीम् चोत्तमे उपदधातीत्युक्त्वा नान्यामिष्टकामुत्तरामुपदध्या-दित्यादिना सर्वोपरीष्टकान्तरनिधाननिषेधवैयर्थ्यापत्तेः, पुष्करपर्णादिच-तुष्टयस्य त्वनियमेन निवेशे प्रसक्ते नियमविशेषार्थो विधिर्न विरुध्यते ॥

## सू० गणेषु ॥ १९ ॥

प्राचीरुपदधाति प्रतीचीरुपदधातीत्यादौ यत्रेष्टकागणानुवादेन प्राङ्मुखत्वादिकं विधीयते तत्र चतुरस्रेष्टकासु मुखाभावात्प्राङ्मुखकर्त्तु-पधेयत्वेनैवेष्टकानां प्राङ्मुखत्वाद्युपचार इति प्राप्ते एकैकस्या इष्टकाया मुखाद्यसम्भवेऽपि बहूनामिष्टकानामुपधाने प्राक्संस्थत्वादेरनियमेन प्राप्तौ प्रागपवर्गा एवेत्यादिनियमार्था विधयः। अत एव प्रतीचोऽनूया-जान् यजतीत्यस्य वाक्यशेषे प्राञ्चमुत्तमं संस्थापयत्युत्तमेनेत एव नु सम्भि-नत्तीत्यत्र प्रत्यगपवर्गत्वे प्राप्ते प्राक्संस्था आहुतीर्विधाय चरमयेतरयोरनु-सम्भेदेनैव प्रत्यक्त्वमुपपद्यते ॥

## सू० पश्चात्प्राचीम् ॥ २० ॥

पश्चात्प्राचीमुत्तमामुपदधाति तस्मात्पश्चात्प्राची पत्न्यन्वास्त इत्यत्राप्युक्तन्यायेन रीतिवादे प्राप्ते गणेषु तथा सम्भवेऽप्येकस्यां तदयोगाद्वाक्यशेषे कर्तृगतत्वेनैव विवरणाच्च कर्त्तुरेवायं मुखवादः पुरस्तात्प्रत्यञ्चमिति कर्त्तुर्मुखवादः। पुरस्तात्प्रत्यञ्चमिति तु कर्ममुखवादः॥

## सू० पुरस्तात् ॥ २१ ॥

पुरस्तादन्याः प्रतीचीरुपदधाति पश्चादन्याः प्राचीरित्यत्रापि कर्त्तुर्मुखवादः। पश्चात्प्राचीरिति पदस्य प्रपूर्वाधिकरणे निर्णीतार्थकत्वात् सन्निधानाच्चेति प्राप्ते बहुत्वादिष्टकानामपवर्गनियमार्थैवेत्र विधी तस्मात्प्राचीनानि प्रतीचीनानि च नक्षत्राण्यावर्त्तन्त इति नक्षत्रमण्डलेनेष्टकाविन्यासस्तुतिदर्शनात्॥

## सू० चित्यां चित्याम् ॥ २२ ॥

वृषभमुपदधातीति श्रुतो वृषभ-शब्दः पशुपरः कूर्मादिवत्तस्याप्युपधेयत्वसम्भवादिति प्राप्ते चित्यां चित्यां तदुपधानश्रवणेन पञ्चसु चितिषु तदुपधाने जानुदघ्नत्वविरोधात्त्वामग्ने वृषभमिति मन्त्रोपधेयेष्टकापरोऽयं वृषभशब्दः॥

## सू० एतेन मन्त्रलिङ्गाः ॥ २३ ॥

प्राणभृत उपदधातीत्यत्रापि जानुदघ्नत्वाद्यविरोधेन क्षुद्रजीवानामुपधानसम्भव इति प्राप्ते तद्वानासामुपधानो मन्त्र इति स्मृत्या प्राणभृत्पदघटितमन्त्रकरणत्वेनोपपत्तौ न प्राणिहिंसानिषेधसङ्कोचो युक्त इति॥

## सु० तद्द्रव्याणि ॥ २४ ॥

घृतेष्टका उपदधातीत्यादावपि घृतं मिमिक्षिर इत्यादिमन्त्रैरुपधानं मृन्मयीनामेव प्राणभृन्न्यायेन विधीयत इति प्राप्ते घृतद्रव्यस्यैवोपधानं घटे पूरणेन तत्सम्भवात्। पुष्करपर्णस्येव तल्लिङ्गमन्त्राणां क्रमप्रकरणयोरभावात्। वृषभादिवद्विरोधाभावाच्च॥

## सू० षिकर्णी ॥ २५ ॥

पुष्कमण्डलेष्टका उपदधातीत्यादिना श्रुतामण्डलादीष्टकानाम्नोऽन्वर्थकत्वाय परिमण्डलाद्याकारा भवेयुरिति प्राप्ते चयनरूपकार्यार्थताविरोधाच्चतुरस्राणामेवैतानि नामानि ।

## सू० मध्यमायाम् ॥ २६ ॥

चयनाधारभूमेरुत्तरवेदिधर्माः कार्या इति प्राप्ते प्रकृतौ मध्यमोपसदि विहिताया उत्तरवेदेः स्थाने एव विकृतावग्नेर्विधानेन तत्कार्यापन्नतया शरेष्विवाग्नावेवोत्तरवेदिधर्मा न तदधोभुवो भवन्ति ॥

## सू० अनुपसदम् ॥ २७ ॥

मन्त्रब्राह्मणयोर्दीक्षोत्तरमेव चयनपाठादुपसद्भ्यः पूर्वमेवाग्निश्चेतव्य इति प्राप्ते यदहरग्निं चेष्यमाणस्तदहरुभयं समस्येदित्यग्न्युपसदोरेकाहक्रियमाणत्वरूपसमासविधानादुपसद्दिन एवाग्निश्चेतव्यः ॥

## सू० इष्टकाकर्मणि ॥ २८ ॥

इष्टकानां निर्माणे विशिष्य कालविधेरभावाद्यथाकाम्ये प्राप्ते दीक्षोत्तरकाल एव नियम्यते । इष्टकासूख्यभस्म स्पृश्यते तेन सर्वा अग्नयो भवन्तीति वचनेनोख्याग्निभस्मनो मृदश्च संसर्गविधानात् । तस्य च दीक्षातः पूर्वमसम्भवात् ॥

## सू० तन्मासप्रभृति ॥ २९ ॥

मासादिदीक्षाकल्पस्यैवेष्टकानिर्माणपर्याप्तकालत्वात्साग्निचित्यक्रतावेकादिदीक्षापक्षा न प्रवर्त्तरन्निति प्राप्ते न प्राजापत्येनानिष्टकाः कारयेदिति प्रतिषेधान्यथानुपपत्त्या दीक्षातः पूर्वं प्राजापत्यपशोः परतोऽपि तन्निर्माणकाललाभादनेन कालेन सहाविरोधादेकादिदीक्षापक्षाणां प्रकृतितः प्राप्तानां न बाधः ।

## सू० त्रिःपरार्ध्यः ॥ ३० ॥

त्रिवारमेवाग्निश्चेतव्यो नाधिकवारं जानुदघ्नं चिन्वीतेत्यादिवाक्यैस्त्रिवारमाह्रियमाणानामेव स्थण्डिलपरिमाणेष्टकासंख्यानां विधानादिति प्राप्ते याथाकाम्येन बहुवारं प्राप्तस्य तदाहारस्य परिसंख्यार्थत्वे गौरवापत्तेः प्रथमाद्याहारनिमित्तकगुणमात्रविधानपरत्वेनापि तेषां विधीनामुपपत्तेरुत्तरमुत्तरं ज्यायांसमित्यस्य नास्य दघ्नं चित्वाकनीयांसं चिन्वीतेत्यस्य वृहत्तममपरिमितं स्वर्गकामश्चिन्वीतेत्यस्य चार्थवत्त्वाय सन्ति चतुर्थाद्याहाराः ॥

## सू० तस्येष्टकाः ॥ ३१ ॥

चतुर्थादिष्वाहारेषु पुनः प्रथमत्वादिविवक्षयैकद्वित्रिसाहस्रा एवेष्टका भवेयुः । कनीयसो निषेधाद्वा त्रिसाहस्रस्यैवाभ्यासः संख्यान्तरस्यानाम्नानादिति प्राप्ते प्रकृतानां संख्यानां नैमित्तिकत्वान्निमित्तमन्तरेण तदप्रवृत्तेः संख्यान्तरमेवाश्रयणीयम् ॥

## सू० यदृषीणाम् ॥ ३२ ॥

यदृषीणामाग्नेयं तेन सम्वत्सरमग्निं चिन्वीतेति विहिता ऋगिन्द्रदृष्टा मन्त्राः सन्निहिकत्वाद्याज्ञसेनीमन्त्रा एव भवन्ति न दाशतयीस्थाः । तेषां प्रकरणपाठाभावेनानङ्गत्वात् । एतद्वा ऋषीणामाग्नेयं छन्दो यद्याज्ञसेनीरिति वाक्यशेषेण विवरणाच्चेति प्राप्ते दाशतय्या अग्निमीळे मधुच्छन्दा इत्यादिनैदम्पर्येण ऋषीणां स्मरणात्तेषामेव वाक्यशेषेण विवरणात्त एवानेयाः । किञ्च सूक्तेनोपदधात्यसूक्तस्यावच्छेदायेति सूक्तस्यैव करणत्वेन विधानात्सूक्तप्रसिद्धेश्च दाशतयीतोऽन्यत्राभावान्न याज्ञसेन्यः करणानि ॥

## सू० याज्ञसेनीः ॥ ३३ ॥

याज्ञसैनीनामप्येतद्वा ऋषीणामिति वाक्येनाभ्यृषिकत्वविधानेन स्मृतितः प्राबल्यात्सन्निहितत्वाच्च करणत्वम् । न च मन्त्राल्पत्वं दण्डकलितवदावृत्तिसम्भवात् । कर्मभूयस्त्वाधिकरणन्यायेन स्वस्थानविवृद्धेर्वा आवृत्त्यापि यदा कर्मणामपूर्तिस्तदा तावन्मान्त्रार्थं दाशतयीत

आगम इति प्राप्ते त्रिवृदग्निष्टुदित्यादाविव प्राकृतस्य सर्वस्यापि निवृत्तेरवश्यम्भावात्सर्वसंख्यापर्याप्ताग्नेयलाभे तदपर्याप्तग्रहणायोगादुक्तवाक्यशेषस्य स्तावकत्वेन प्राबल्याभावाच्च न दाशतयीस्थानां याज्ञसेनीभिः समुच्चयः । मूले तु पूर्वाधिकरणपूर्वपक्षावस्थायामयं कृत्वाचिन्तया विचार इत्युक्तम् । तत्कारणस्य वा विकार इत्येतत्सिद्धान्तसूत्रस्वारस्यविरोधादुपेक्षितम् ॥

## सू० दाशतयीभ्यः ॥ ३४ ॥

यावन्ति नानामन्त्राभ्युपधानानि तावत्संख्यानामेव दाशतयीत आनयनं नाधिकानां गायत्रीषु स्तुवत इत्यादौ स्तोमपरिमितानामेवर्चामागमनस्य दृष्टत्वात् । आगमनस्य कार्यार्थत्वेन कार्यसमाप्तावधिकानां प्रयोजनाभावादिति प्राप्ते सर्वेषामप्याग्नेयानां यद्वर्षीणामित्युद्देश्यकोटौ निवेशेन विनियोगात्सर्वेषामेवाङ्गत्वं, सर्वे तु वेदसंयोगात्कारणादेकदेशस्येति न्यायात् ॥

## सू० प्रतिसूक्तम् ॥ ३५ ॥

सर्वेषां मन्त्राणामागमे सति तावत्य इष्टका अप्यभिवर्धनीयाः सामिधेनीविवृद्धौ काष्ठाभिवृद्धिदर्शनात् । इष्टकाल्पत्वेऽपि मन्त्रभूयस्त्वन्यायेनैकार्थत्वाद्विकल्पसम्भव इति प्राप्ते सूक्तेन सूक्तेनोपदधातीति वचनेन प्रतिमन्त्रमुपधानस्यैवाभावाद्यावत्सूक्तमेवेष्टकाः । सूक्तेभ्योऽपीष्टकानामाधिक्ये तु लोकम्पृणाभिरेवोपधानम् ॥

## सू० यद्वर्षीणाम् ॥ ३६ ॥

त्रिसाहस्रापेक्षया किञ्चित्संख्याधिक्येऽपि वेष्टकानामेकविधाद्येकशतविधत्वान्तान्यतमपरिमाणाधिक्ये वा ज्यायस्त्वसम्भवात्सूक्तानां कतिपयानामग्न्युपस्थाने विनियोगः कार्य इति प्राप्ते यद्वर्षीणामिति वाक्ये तेन चिन्वीतेति चयनसंयोगाच्चयनातिरिक्ते न तेषामुपयोगः ॥

## सू० गायत्रचितम् ॥ ३७ ॥

आगम्यमानानामृचामविशेषेण विनियोगे प्राप्ते गायत्रचितं चिन्वीत ब्रह्मवर्चसकामस्य त्रिष्टुप्चितं वीर्यकामस्य जागतीचितं पशुकामस्येत्यादीनां कामसंयोगात्तत्कामुकानामेव तत्तच्छन्दस्का ऋचो ऽकामानां तदितरच्छन्दस्का एवेति व्यवस्था ॥

## सू० शीर्षवान् ॥ ३८ ॥

सशिरस्क एवाग्निश्चेतव्यः । वयसां वा एष प्रतिमया चीयत इति पक्षितुल्यताश्रुतेः । अग्नेः शीर्ष्णा अग्नेः शिर उपदधामीति मन्त्रवर्णात् । पक्षयोः स्तुवते त्रिवृता शिरसि स्तुवत इत्यादिविधिदर्शनाच्चेति प्राप्ते इष्टकाविशेष एवात्र शिरः–शब्देनोच्यते । पक्षिप्रतिमतायाः किञ्चित्सादृश्येनाप्युपपत्तेः स्वयमातृण्णाहोमे एतद्वा अग्नेः शिर इत्यादिवद्गुणवादेनापि मन्त्रगतशिराशब्दोपपत्तेः शिरसि स्तुवत इति वैधेऽपिपद्वे वास्तविकशिरसोऽभावादेव लाक्षणिकता ॥

## सू० सुपर्णः ॥ ३९ ॥

पक्षिसामान्यतुल्यताया विशेषे पर्यवसानमन्तरेणानुष्ठातुमशक्यत्वात् दिव्यं सुपर्णं वयसा बृहन्तमिति मन्त्रवर्णेन बृहत्सुपर्णपरतया वयसां प्रतिमयेत्यस्योपसंहारान्मन्त्रस्य च नित्यवदङ्गत्वात्सुपर्णाकृतिर्नित्येति प्राप्ते सामान्यवाक्यस्य विशेषमन्त्रस्य च विधित्वाभावेनोपसंहार्योपसंहारकभावाभावाद्धिरण्यपक्षःशकुनोभुरण्युरितिवदुभयमपि स्तुतिमात्रम् ॥

## सू० श्येनचितिः ॥ ४० ॥

दिव्यं सुपर्णमिति मन्त्रस्य विधायकत्वाभावेऽपि वयसां वा इति वाक्ये लेटः श्रवणात्तस्य च श्येनचितिं चिन्वीत स्वर्गकाम इति विधिनोपसंहारसम्भवात् स्वर्गकामोपबन्धात् श्येनाकृतिर्नित्यकाम्या ऐन्द्रवायवायतावदिति प्राप्ते श्येनकङ्काद्याकृतिविशेषाणां सामान्यतोऽनुवादमात्रेणाप्युपपत्तौ लेट्त्वकल्पने मानाभावात्केवलकाम्यैव श्येनचितिः । नित्यैवेति तु याज्ञिकानां परिभाषामात्रम् ॥

## सू० लोकम्पृणा ॥ ४१ ॥

लोकम्पृणा–सूददोहपदघटिते द्वे ऋचौ पठ्येते । ताभ्यामावृत्ताभ्यां द्वे द्वे इष्टके उपधातव्ये प्रत्येकं करणत्वात् । अष्टौ नानायजुषस्त्रयोदश लोकम्पृणा उपदधाति ता एकविंशतिः संपद्यन्त इति सङ्ख्याविरोधाद्वा मन्त्रयोर्निरपेक्षकरणत्वेन विकल्पः । वस्तुतस्तु लोकम्पृणेष्टकामात्रमेलनेन सङ्ख्योक्तेरविरोधात्सूददोहेष्टकानां पार्थक्येऽपि न दोषः । परन्त्वनुष्टुभानुचरतीति विधावनु–शब्दस्वारस्येन ता अस्य सूददोहस इत्यनुष्टुभोऽप्राधान्यावगमाद् द्वाभ्यामपि मन्त्राभ्यामेकैकैवेष्टकोपधातव्येति प्राप्तेऽनुचरतीति पदेनैवोपधानोत्तरकालमन्त्रपाठवगतेरुभयोः समुच्चित्य करणत्वे समप्राधान्येनानुचरत्वभङ्गापत्तेश्च लोकम्पृणयोपधाय सूददोहयाभिमर्शनं कर्तव्यम् । याज्ञिकास्तूभयोरेकमन्त्रत्वमिच्छन्ति ॥

इति श्री सांकर्षे भाट्टदीपिकायां चतुर्दशाध्यायस्य प्रथमः पादः ॥ १ ॥

अथमिष्टकापादः ।

---

# अथ चतुर्दशाध्याये द्वितीयः पादः ।

---

## सू० हृदयशूलम् ॥ १ ॥

तं नाग्नीषोमीये करोति न सवनीयेऽनुवन्ध्यायां तु करोतीति हृदयशूलं प्रकृत्य श्रूयते । तत्राग्नीषोमीये पूर्वं विधाय पुनः प्रतिषेधाद्दृदयःश्रपणे शूलस्य विकल्पः । सवनीये च पक्षतः प्राप्त एव तदभावो नियम्यते । अनूवन्ध्यायां तु सद्भावनियम इति प्राप्ते । त्रयाणामपि पशूनां शूलं तन्त्रमित्युक्तन्यायसिद्धार्थानुवादकत्वे सम्भवत्यष्टदोषदुष्टो विकल्पो न युक्तः, सर्वधात्वर्थानुस्यूतक्रियासामान्यवाची करोतिरिहोद्वासनक्रियापरः । तन्त्रत्वादेव सर्वान्त एवोद्वासनं न पूर्वयोरिति । यत्ते गात्रादग्निना पच्यमानादभिशूलं निहितस्याभिधावति । मा तद्भूम्यामाश्लिषन्मातृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्त्विति मन्त्रे हृदयशूलस्य भूस-

श्लेषाभावकथनमप्यत्रैव लिङ्गम् । अन्यान्यपि लिङ्गदर्शनानीह भाष्यतोऽवगन्तव्यानि ॥

## सू० समिधः ॥ २ ॥

वनस्पतियागे समिद्बर्हिः प्रयाजादिषु च या देवतास्ताः प्रत्यक्षा यूपसमिद्बर्हिरादय एव । यूपमेवैनं भागधेयं करोतीति वचनान्तरे यूपस्यैव वनस्पतीज्याभागित्वश्रवणात् । अप्रसिद्ध लौकिकार्थान्तरकल्पने मानाभावाच्चेति प्राप्ते नामसाम्यमात्रेण तत्प्रत्यक्षाणां देवतात्वम् । अलौकिकप्रमाणैकसमधिगम्याया अपूर्ववदलौकिकत्वावश्यम्भावात् । भावनायां करणत्वेनान्वयदशायामेव देवतोद्देश्यकत्वेन यागस्वरूपबोधात्पश्चात्कथंभावाकाङ्क्षयाऽन्वीयमानानामिध्मबर्हिरादीनां देवतास्वरूपघटकत्वायोगात् सरस्वतीति प्रसिद्धदेवतानामसाम्येनैका चैतत्सरस्वती नदीनामिति मन्त्रे नदीस्तवनवत्सोमलतायामुमासहायनामसाम्येन सोमः पवते जनिता मतीनामिति मन्त्रे द्यावापृथिव्यादिजनकत्वोक्तिवच्च स्तावकमात्रं यूपस्य हविर्भागित्ववादः । अत एव प्रयाजेषु देवताविप्रतिपत्तौ निर्णायिका स्मृतिः । आग्नेया इति तु स्थितिर्भक्तिमात्रमितरदिति । कौषीतकी श्रुतिरपि । यदुत्तमे प्रयाजे देवताः समावपति प्रयाजभाज एवैनास्तत्करोति तद्यथाग्निः सर्वेषु भागी भवत्येवं तदग्नेर्भागे देवताभागिनीः करोतीति पञ्चस्वपि प्रयाजेष्वग्नेर्भागित्वं सिद्धवत्कृत्याह ॥

## सू० पार्वणेन ॥ ३ ॥

पार्वणौ जुहोतीति होमः कालाभीज्येति प्राप्ते कर्माभीज्यैव तेन विकृतिषु पौर्णमास्यमावास्यानामेकसमुदायाभावे न तत्संस्कारकहोमातिदेश इति नावमिकप्रयोजनम् ॥

## सू० सोमे दर्शे ॥ ४ ॥

ज्योतिष्टोमे ये दर्शपूर्णमासविकारास्तेषु याजमानमन्त्राणां नातिदेशः । यज्ञो बभूवेति याजमानमन्त्राणां नातिदेशः यज्ञो बभूव स आबभूवेति याजमानमन्त्रस्य पुनर्विधानेन गृहमेधीयाज्यभागन्यायेन तदि-

तरपरिसंख्यासिद्धेरिति प्राप्ते स्तुतशस्त्रानुमन्त्रणार्थत्वेन तस्य पुनर्विधानेऽप्याज्यभागयोरिव प्रकृतिक्लृप्तोपकारार्थत्वेन तदभावाच्च परिसंख्यात्वम् ॥

## सू० चतुरवत्तम् ॥ ५ ॥

चतुरवत्तं जुहोतीति विधौ जुहोतेर्विशेषणान्तरासहत्वात्तदभावाच्च होमत्वमेवोद्देश्यतावच्छेदकं तस्य च दर्विहोमेष्वप्यविशेषात्प्रवृत्तिरिति प्राप्ते होमचतुरवत्तयोरन्यतोलब्धयोरिह सम्बन्धमात्रविधानेन पुरोऽनुवाक्यायै याज्यायै देवतायै वषट्काराय चतुरवत्तं जुहोतीति श्रुत्यन्तरे पुरोऽनुवाक्यादिसम्बन्धिहोमस्यैवोपस्थितेर्दर्विहोमानामतथात्वाद्गृहीततात्पर्यकजुहोतिना होमविशेषस्यैवोपस्थापने बाधकाभावाद्दर्विहोमेष्वेव चतुरवत्तम् ॥

## सू० पञ्चावत्तम् ॥ ६ ॥

जामदग्न्यानां पञ्चावत्तविधौ जामदग्न्यकर्तृकहोममात्रोपस्थितेर्दर्विहोमेषु स्यादेव पञ्चावत्तमिति प्राप्ते प्राप्तचतुरवत्तोद्देशेन निमित्ते पञ्चमावदानमात्रविधानेन दर्विहोमेषु चतुर्थस्यैवाभावात्पञ्चमाप्रवृत्तिः । जमदग्निर्वा इत्युपक्रम्य स एतं पञ्चममवदानमपश्यत्तं निरवपदिति वाक्यशेषात् ॥

## सू० पञ्चावत्तमाज्यात् ॥ ७ ॥

तेषां यत्पञ्चममवदानं तस्य पदसामर्थ्यादेव चतुर्थोत्तरत्वोपस्थितेरभिघारणमेकमभिवर्धते इति प्राप्ते चतुर्थोत्तरत्वमात्रोपस्थितेर्यथाकथञ्चिदङ्गीकारेऽपि चतुर्थावदानकर्मीभूतमेवेह द्रव्यं विवक्षितमित्यंशे मानाभावात्प्रधानभूतादोषधद्रव्यादेवावदेयम् । वस्तुतः षष्ठो भ्राता न दृश्यत इत्यादौ मध्यमेऽपि षट्पूरकत्वव्यवहारादौषधतृतीयस्यापि पञ्चमत्वोपपत्तिः । पशुर्वा एष यत्पुरोडाश इत्यादिना पुरोडाश एव पशुत्वमुपचर्य मध्यपूर्वपश्चार्धावदानानां हृदयजिह्वागुदावदानत्वेन संस्तु*त्यैवं तत् पञ्चावत्तं पांशोर्व्याप्त्या इत्युपसंहारदर्शनाच्च ॥

* संस्तुत्येवेति पा॰ ।

## सू० अन्ततः ॥ ८ ॥

पूरणप्रत्ययेन लोकव्यवहारस्यैच्छिकत्वेऽप्यपौरुषेये तदयोगादुक्तलिङ्गदर्शनस्य क्रमानभिधायकत्वादागन्तूनामन्ते निवेश इति न्यायेनाभिघारणोत्तरं हविषः पश्चार्धादवदेयमिति प्राप्तेऽभिघारणस्य संस्कारकत्वादे । संस्कार्योत्तरं प्रवृत्तेरौषधस्य त्रीण्यवदानानि क्रमिकाण्येव ॥

## सू० पश्चार्धात् ॥ ९ ॥

औषधाद्धतृतीयमवदानं तदुक्तं लिङ्गदर्शनवाक्ये एवं तत्पश्चार्धाद्यथा गुदस्येति गुदत्वेन पश्चार्धसंस्तवात्पुरोडाशस्य पश्चिमभागादेव भवेत् । तच्च पाठक्रमात्तृतीयमिति प्राप्ते मध्यादवद्यतीति विधाय यदुभयतोऽवद्येदित्यादिना पूर्वपश्चार्धयोरवदानं विनिन्द्योत्तरार्धादेवोभे अवद्येदिति स्पष्टं विधानात्सौविष्टकृतावदानस्यलादेत्र द्विरवदानेन हविस्त्रिरवदानसिद्धिरिति तु भाष्याभिप्रायः । वस्तुतस्तु आवापस्विष्टकृतोर्द्वितीयं पञ्चावत्तिन इति सूत्रे वा-शब्दादेरभावेन पूर्वपक्षनिरासे मानाभावादेकेषामित्यस्याभावेऽपि द्वावपि शाखाभेदेन सिद्धान्तावेव । पञ्च प्रयाजे अग्न आज्यस्य व्यन्त्विति हैक आहुर्न तथा कुर्यादित्यादिना शाखान्तरसिद्धमेव मन्त्रपाठं विनिन्द्याज्यस्य हविषो व्यन्त्वित्येव ब्रूयादिति कौषीतकिब्राह्मणे विधानेऽपि नहि निन्दान्यायेन विधेयस्तुतिमात्रार्थत्वेन द्वयोरपि यूपावसानाधिकरणसिद्धान्तसिद्धत्वात् । पशुयूपक्रमाधिकरणे न्यायोपोद्बलितवचनस्य न्यायविरुद्धवचनतः प्राबल्यस्य भाष्यकारैरेव वर्णनेन पश्चार्धात्तृतीयं पञ्चावत्तिनः क्रमसंयोगादिति सूत्रे न्यायोपन्यासेन तस्य प्रकृतावन्यस्य विकृतिषु निवेश इत्यपि सुवचम् ॥

## सू० सकृदुपहृतेन ॥ १० ॥

वनस्पतीज्यां प्रकृत्य सकृदुपहृतेन यजतीति श्रुतेन सकृद्गृहीतेन तदीयोपस्तरणाभिघारणनिवृत्तिः । स्विष्टकृद्विकारत्वेनैव सकृद् गृहीतलाभादिति प्राप्ते संसर्गरूपका स्याभावादेव तन्निवृत्तौ पञ्चावत्तिनां

हविर्द्विरवदानस्य प्राप्तौ तदर्थोऽयं निषेधः । पृषदाज्याच्चतुरिति शाखान्तरीयवचनात्तु हविष एव चतुर्गृहीतपक्षेऽपि संस्कारनिवृत्तिः ॥

## सू० यदपरम् ॥ ११ ॥

पूर्वंपूर्वांग्यवद्यो ज्येष्ठस्य ज्यैष्ठिने यस्यापरपूर्वांणि कनिष्ठस्य कानिष्ठिने यस्येति यदपरमवदानं तत्पूर्वमवदाय स्रुचौ निदध्यादित्यादिषु पूर्वापरशब्दाभ्यां देशः कालो वोच्यते । उभयत्रापि तयोर्निरूढत्वात् । अन्यतरस्य नियमने प्रमाणाभावादिति प्राप्तेऽवदानपदेन भावे घजन्तेन कर्मण एव कथनात्तत्समानाधिकरणे पूर्वापरपदे अपि कर्मपरे एवेति न विकल्पः । प्रथमद्वितीययोरवदानयोः समन्त्रकामन्त्रकत्वाभ्यामिह फलभेदः ॥

## सू० षोडशानि ॥ १२ ॥

चतुर्जुह्वां गृह्णातीत्यादि विधाय षोडशान्याज्यानि भवन्तीति श्रुतानि षोडशगृहीतानि चतुर्गृहीतादिभिः सह विरोधाद्विकल्प्यन्त इति प्राप्ते स्रुक्त्रयगृहीतानां समस्यवादोऽयं चतुर्दशपौर्णमास्यामाहुतयो हूयन्त इतिवत् । विकल्पस्यान्याय्यत्वात् ॥

## सू० सप्तदशानि ॥ १३ ॥

अग्निहोत्रप्रकरणे सप्तदशान्याज्यानि पशुकामस्य गृह्णीयादिति श्रुते समस्य वादासम्भवात्पयःप्रभृतिद्रव्याणां तदवदानसंख्यायाश्च पशुकामाग्निहोत्रप्रयोगे निरास इति प्राप्ते पशुकामस्य पञ्चगृहीतं ध्रुवायां यथा प्रकृतीतरयोरिति दर्शपूर्णमासप्रकरणस्थकल्पसूत्रानुमितश्रुत्यनुवादकत्वादयमपि समस्यवादः प्रकरणादुत्कृष्येत ॥

## सू० तेषां पृथक् ॥ १४ ॥

इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायाधिराजायेन्द्राय स्वराज्ञ इति प्रकृत्यैकं पुरोडाशमधिश्रपयतीति श्रुते वाचनिके

पुरोडाशैकत्वेऽपि हविर्भेदादवदानमपि त्रिर्भवेदिति प्राप्ते सर्वेषामभिगमयन्नवद्यत्यच्छंबट्कारमिति वचनादधिश्रपणवत्सहैवावदानं तैत्तिरीयशाखायां तु त्रयः पुरोडाशा उत्तरोत्तरे स्थूला आम्नाताः । तत्पक्षेऽपि त्रैधातवीयायामिव सहैवावदानम् ॥

## सू० नाना वा ॥ १५ ॥

त्रीण्यप्येतानि हवींष्यवदानैकत्वात्संप्रतिपन्नदेवताकत्वात्सहैव प्रदीयेरन्निति प्राप्ते विशेष्यस्यैकत्वेऽपि राजादिगुणभेदेन देवतापृथक्त्वादवदानादेर्वचनाद्यौगपद्येऽपि प्रदानानि भिद्येरन्नेव, एवं सति तिसृणामेवर्चां याज्यात्वमनुवाक्यात्वं च सङ्गच्छते ।

तदित्थं प्रथमामनूच्य मध्यमया यजेन्मध्यमामनूच्योत्तमया यजेदुत्तमामनूच्य प्रथमया यजेदेवं सर्वा अनुवाक्याः सर्वा याज्या भवन्तीति श्रुतेः ॥

## सू० एककपाले ॥ १६ ॥

द्यावापृथिव्याद्येककपालेषु वैश्वानर्यां च वपायां च प्रकृतितः प्राप्तत्वादवदानसम्पद्भवेदेवेति प्राप्ते यजमानो वा एककपालेषु वैश्वानर्यां च वपायामित्यादिनाऽवदानेन यजमानस्य मरणमुक्त्वा सकृदेव होतव्यमिति विधानेनावदानप्रतिषेधः कल्प्यते । इतरयोरपि लिङ्गं भाष्ये द्रष्टव्यम् ॥

## सू० त्र्यङ्गानाम् ॥ १७ ॥

प्रत्यभिघारयत्ययातयामत्वायेति श्रुतौ तादर्थ्यचतुर्थ्या प्रत्यभिघारणस्य यातयामतानिरासैकप्रयोजनकत्वावगतेस्तस्याश्चेज्याशेष एव प्रसक्त्या पशाविज्याशेषेषु सौविष्टकृतत्र्यङ्गेषु स्वत एवायातयामेषु न हविःप्रत्यभिघारणमिति प्राप्ते प्रत्यभिघारणस्य स्नेहनार्थताया दृष्टाया अर्थवादबलेन परित्यागस्यान्याय्यत्वात्प्रकृतितः प्राप्तत्वात्कर्तव्यमेव, अत एवोपस्तरणाभिघारणयोरप्यदनीयस्नेहनार्थत्वात्कपालेषु तन्निवृत्तिरुक्ता ॥

## सू० पशोः प्रदानम् ॥ १८ ॥

प्रकृतितः प्राप्तत्वात्पशावपि दैवताऽवदानोत्तरमेव प्रदानमिति प्राप्ते दैवतान्यवदायाथोपभृत्यथ समवत्तधान्यामित्यनेन दैवतावदानसमनन्तरकाल एव सौविष्टकृताद्यवदानविधानात्तस्य प्रदानेन व्यवधानायोगात्र तावत्येव होतव्यमित्यनुवाददर्शनाच्च समानकालान्यवदानानि कृत्वा प्रदानम् ॥

इति सङ्कर्षे भाट्टदीपिकायां चतुर्दशाध्यायस्य द्वितीयः पादः ॥ २ ॥

अवदानपादः ।

---

# अथ चतुर्दशाध्याये तृतीयः पादः ।

---

## सू० यजेति ॥ १ ॥

एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त इति श्रुता आश्रावयेत्यादिशब्दा अदृष्टार्था एव पूर्वपूर्वपदार्थैरेवोत्तरपदार्थस्मरणेन दृष्टप्रयोजनान्तराभावात् । ऋत्विजां वरणस्य दृष्टार्थत्वेन परकर्तृकपदार्थोत्तरकालिकस्यापि स्वस्वपदार्थस्य तत्तत्कालेऽपि स्मृतिसम्भवात् । आश्रावयेति चतुरक्षरमित्यादिश्रुतौ चतुर्भिश्च चतुर्भिश्चेत्यादिस्मृतौ चाक्षरपरिगणनस्य चत्वार ईंबिभ्रति क्षेमयन्तः कामो योनिः कमलावज्रपाणिरित्यादिश्रुतिषु मन्त्रोद्धारस्यैवोद्ध्रियमाणानामदृष्टार्थत्व एव सामञ्जस्याच्चेति प्राप्ते प्रकृतिप्रत्ययार्थविभागेन पच पच्यामीत्यादाविव प्रैषप्रतिवचनार्थत्वावगतेरनुभूयमानायाः परित्यागायोगान्मन्त्रोद्धारस्य नियमादृष्टार्थतया स्तुत्यर्थतया चाविरोधाद् दृष्टार्थ एव सप्तदशः । सूत्रभाष्ययोः*यजये यजामह इत्यनयोरेवोदाहरणं तु लिङ्गदर्शनानुगुण्याय प्रैषप्रतिवचनार्थप्रतिपत्तृत्वेन तत्राध्वर्युहोत्रोरेव कीर्तनात् ॥

---

* यजये इत्यपि पा० ।

## सू० प्रजापतिः ॥ २ ॥

अग्नयेऽनुब्रूहीत्यादाविवाग्निं यजये यजामहेऽग्निमिति तत्तद्देवतानाम्नां योगे सप्तदशाक्षरत्वभङ्गापत्तेर्नियमादृष्टविरोधादश्रुतकल्पने मानाभावादाकाङ्क्षितकर्मपदस्य छिनद्मीत्यादिवदर्थाध्याहारेणाप्युपपत्तेरग्निपदस्याध्याहारेऽपि तस्य प्रैषादौ प्रतिवचनान्त एवेति नियमेऽपि मानाभावाद् द्व्यक्षरपञ्चाक्षरावेव तौ प्रयोज्याविति प्राप्ते सर्वदेवतापदसाधारणांशमादायापि सप्तदशत्वोपपत्तेरर्थाध्याहारस्य निरस्तत्वाच्च देवताविशेषपदमन्तरेण यागविशेषप्रतिपत्तेरभावेनानन्तराधिकरणसिद्धदृष्टार्थत्वभङ्गापत्तेश्च देवतानाम्नामादेशः । अत एव, शाखान्तरेऽमुष्मा अनुब्रूह्यमुं यजेत्यादिवचनैर्देवतानामविशेषोपलक्षकोऽदः शब्दः श्रूयते । असावेहि अवधिष्मामुम् इदमहममुष्येत्या*दिवचनैर्देवतापदपौर्वापर्यनियमोऽप्येतद्बलादेव । यत्तु लिङ्गदर्शनमुक्तं मूले यत्तनूनपातं यजेडोयजेति ब्रूयाज्जामि स्याद्यजेत्येव ब्रूयात् मारुतस्याबद्धन्मरुद्भ्योऽनुब्रूहीत्याश्राव्य मरुतो यजेति ब्रूयादित्यादि ज्ञापकादन्यत्रापि देवतापदप्राप्तिरिति । तच्छाखान्तरे तनूनपातं यजेत्येव पाठात्तन्निषेधार्थकत्वेन पूर्वस्येतरस्य तु विधिरूपत्वेनाप्युपपत्तेर्विपरीतसाधकमिति तत्रैवोक्तम् ॥

## सू० प्रथमस्य ॥ ३ ॥

अनुयाजेषु देवान् यजेति प्रैष आम्नातः स च बर्हिर्यागविषयक एव । नराशंसस्विष्टकृतोर्यज यजेति प्रैषान्तराम्नानात् । बहुवचनं त्वविवक्षितार्थम् । उपरवमन्त्रेषु तथादर्शनात् । सर्वार्थत्वे सन्निपातिनोः प्रैषयोः समुच्चयायोगेन विकल्पापत्तेरिति प्राप्ते त्रितयसाधारण एवायं प्रैषः । उपरवमन्त्राणां करणत्वेन प्रत्युपरवमावृत्तेरेकैकस्मिन्नुपरवे बहुत्वासम्भवेनाविवक्षितार्थकत्वेऽपि प्रकृते सम्भवतो बहुवचनस्य तदयोगाल्लिङ्गेन क्रमबाधात् । तृणारणिमणिन्यायेन सन्निपातिनामपि समुच्चयस्याविरोधात् । आवह देवान् यजमानायेति सामान्येनाभिधायाग्निमग्न आवहे-

* इदमहममुष्येत्यादिश्रुतिवत् पदपौर्वापर्यनियमोऽपीति पा० ।

त्यादिविशेषाभिधानमित्यस्य षोडशे वक्ष्यमाणत्वात् । अत एव श्रुत्यन्तरं देवान्यजेत्युक्त्वा ह छन्दांसि वै देवाः छन्दास्येव तद्यजतियद्बर्हिर्यजति गायत्रीं तद्यजति यन्नराशंसं त्रिष्टुभं तद्यदग्निं स्विष्टकृतं जगतीं तदित्युपपद्यते । तेनापबर्हिषावनूयाजौ यजतीत्यत्रभृष्येष्टौ बर्हिरनूयाजाभावेन देवौ यज्ञ यजेत्यूहसमुच्चयाभ्यां नराशंसे प्रैषः फलति ॥

## सू० एकादश ॥ ४ ॥

एकादशानूयाजान्यजतीति प्रयोगगामिनी संख्येत्युक्तं तेष्वेकादशसु प्रत्येकं प्राकृतत्रितयधर्माणां विकल्पेन प्राप्तिः । आग्नेयविकारे तथा दर्शनादिति प्राप्ते समं स्यादिति न्यायेन विभज्य प्रकृतिविकारभावः । गणितशास्त्रे हि समविभागाभावे सैकीकृत्य निरेकीकृत्य वा यथोपपत्तिविभाग उक्तः । तदत्र निरेकपक्षेऽपि समत्रेधा विभागासंभवात्सैकीकरणेन चतुश्चतुर्धाविभागे चत्वारश्चत्वारो बर्हिर्नराशंसयोर्विकारा अवशिष्टाः स्विष्टकृतइति तत्तदनुमन्त्रणमन्त्राणामेव तत्र तत्रातिदेशः ॥

## सू० दशमं बर्हिः ॥ ५ ॥

उक्तन्यायेन दशमानूयाजस्य स्विष्टकृद्विकारत्वे प्राप्ते देवतासामान्यस्योत्पत्तिसमसमयावगतस्य प्रयोगकालावगतक्रमाद्बलवत्त्वेन प्रथमविकारत्वमेव ॥

## सू० चतुर्थोत्तमयोः ॥ ६ ॥

एकादशप्रयाजानामपि निरेकीकरणेन समपञ्चधा विभागेनान्त्यस्यान्त्यास्त्रयोविकारा अन्येषां द्वौ द्वाविति प्राप्ते प्रथमादीनां चतुर्णां देवतासामान्यात् क्रमेण चत्वारो विकाराः ॥

## सू० एवमस्यान्त्यः ॥ ७ ॥

अन्त्योपान्त्यमध्ये ये तावदप्राकृताः षट् प्रयाजाः पठितास्तेषां देवतासामान्याभावात्समं स्यादिति न्यायेन चतुर्थपञ्चमयोस्त्रयस्त्रयो विकाराः क्रमेण भवन्ति ॥

## सू० पञ्चनूयाजेषु ॥ ८ ॥

पशावनूयाजेष्वेकादश प्रैषा मैत्रावरुणकर्त्तृकाः सन्ति । ते सर्वे प्राकृतयोर्यजेत्युत्तरानूयाजप्रैषयोर्विकाराः । तेषामध्वर्युप्रैषापेक्षया द्वितीयत्वात् । प्राकृतयोरपि द्वितीयत्वात् । तेनाध्वर्युर्देवान्यजेति प्रथमानूयाज एव सकृद् ब्रूयात् । प्रशास्ता तु पञ्चमानूयाजमारभ्य प्रैषानुब्रूयात् । अन्ये मन्त्रभूयस्त्वन्यायेन विकृत्येर्रविति प्राप्ते मन्त्रवैयर्थ्यापत्तेरेव साधारणस्य प्रथमप्रैषस्य विकाराः । देवं बर्हिर्देवान्यजेति देवताशब्दसामान्याच्च । किञ्चित्साधर्म्यापेक्षयास्य साम्यस्यान्तरङ्गत्वात् । ततश्च देवान्यजेत्यस्यैव निवृत्तिः प्रत्यनूयाजमेकैकः प्रैषो मैत्रावरुणेन वाच्यः । पञ्चमादिषु तु यजेत्यप्यध्वर्युणा वाच्यम् । प्रकृतावुत्तरयोर्द्विद्विप्रैषत्वात् ॥

## सू० उपप्रेष्य ॥ ९ ॥

पशावध्वर्युर्मैत्रावरुणं प्रेष्यति स चाजैदग्निरसनद्वाजन्नित्यादिनोपप्रेष्य होतर्हव्या देवेभ्य इत्यन्तेन मन्त्रेण होतारं प्रेष्यति सोऽपि दैव्याः शमितार आरभध्वमित्यादिना मन्त्रेण शमितॄन्प्रेष्यतीति स्थितिः । एवं सत्युपप्रेष्य होतर्हव्या देवेभ्य इत्यादिश्रुतेरुपप्रैषविषयकप्रैषविधौ तावन्मात्रस्य मन्त्रस्यादर्शनादजैदग्निरित्यास्यैवान्त्यप्रतीकोपादानेन विनियोगविधिः । प्रथमप्रतीक एवोपादेय इति नियमे मानाभावात् । षड्विंशतिरित्येव ब्रूयादिति मध्यमप्रतीकस्याप्युपादानादिति मृतमसि प्राणायत्वेत्यभिव्यनक्तीत्यत्रानःप्राण इतिमन्त्रान्त्यप्रतीकस्याप्युपादानादिति प्राप्ते एनामध्वर्युराहेति प्रकृत्योपप्रेष्येति विधेराम्नानादन्ते च सोऽन्वाहाजैदग्निरसनद्वाजचितीति श्रुतेश्चाध्वर्युप्रशास्त्रोः प्रैषकर्त्तृत्वतदर्थप्रतिपत्तृत्वयोरवगमात्तावन्मात्रस्य प्रत्येकमन्त्रत्वादेष प्रैष एव नोपप्रैषः ॥

## सू० होतारम् ॥ १० ॥

तस्मिन्नेव प्रैषे होतरिति संबोधनाल्लिङ्गाद्धोतारं प्रत्येवायमुपप्रैषविषयकः प्रैषः । यदप्रतिरथं द्वितीयो होताऽऽन्वाहेत्यादाविव द्वितीया-

द्विपदसामानाधिकरण्याभावे मुख्यहोतुरेवोपस्थितेर्व्युत्पन्नत्वादिति प्राप्तेऽजैदग्निरित्यस्य मैत्रावरुणवक्तृकत्वेन तत्रत्यस्य होतरुपप्रेष्येत्यस्योक्तन्यायेनैव स्वस्मिन्प्रैषासम्भवाच्च होत्रुद्देश्यकत्वस्यावश्यकतया प्रैषद्वयस्य वैयर्थ्यापत्याऽध्वर्यून्वृणीत इति निरूपपदानामपि गणेषु प्रयोगदर्शनाच्च मैत्रावरुणं प्रत्येवायं प्रैषः। अत एव यदध्वर्युर्होतारमुपप्रेष्येत्यथ कस्मान्मैत्रावरुण उपप्रैषं प्रतिपद्यत इति लिङ्गदर्शनमुपपद्यते॥

## सू० उक्थशा यज ॥ ११ ॥

उक्थशा यज सोमस्येति स्तुतशस्त्रवतः सोमानाहेति विहितः प्रैषः स्तोत्रशस्त्रोभयवन्तो ये सोमयागाभ्यासास्तेष्वेव निविशते न केवलाज्यादिशस्त्रवत्सु सोमयागाभ्यासेषु द्वन्द्वावगतसाहित्यबलादिति प्राप्ते स्तोत्रवदस्तोत्रवदस्तोत्रवत्साधारण्येन शस्त्रवन्मात्रेऽस्य निवेशः। उक्थं शस्त्रं शंसतीत्युक्थशा इति मन्त्रलिङ्गात्। केवलखड्गधराणां केवलधनुर्धराणां च समवाये धनुःखड्गधरा इम इति प्रयोगदर्शनाच्च। आज्यादिशस्त्रेष्वपि स्तोत्रत्वेनार्थवाददर्शनात्तदभिप्रायेण तेषामपि स्तुतशस्त्रवत्त्वोपपत्तेश्च॥

## सू० बहुशब्दः ॥ १२ ॥

उक्थशा यज सोमानामिति स्तुतशस्त्रवतः सोमानाहेति बहुवचनान्तसोमपदघटितमन्त्रस्यापि उक्तन्यायेन शस्त्रवत्स्वेव निवेशाद्विकल्प इति प्राप्ते शस्त्रवत्स्वपि ये चमसैर्ग्रहैश्च युगपद्धूयन्ते सोमास्तेष्वेवायं मन्त्रः स्यात्। इत्यादि द्रव्याणां तदाधारपात्रसंख्ययैवैकद्विबहुत्वादिव्यवहारदर्शनात्। एकवचनान्तमन्त्रस्तु केवलग्रहकरणकहोम एवेति लिङ्गाद् व्यवतिष्ठते॥

## सू० तां पुरोऽध्वर्युः ॥ १३ ॥

ऋत्विग्भ्यो वाचं विभजति होतर्यज पोतर्यज नेष्टर्यज ब्रह्मन् यज अच्छावाक यजेति प्रैषरूपाया वाचो विभागं विधाय श्रूयते। तां पुरोऽध्व-

र्युर्विभजति मैत्रावरुणः पश्चादिति । अत्र पुरःपश्चाच्छब्दौ देशवादौ कालवादौ वा उभयत्रापि निरूढत्वात् । तेनैकस्मिन्नेव देशे स्थित्वाऽध्वर्युमैत्रावरुणौ पूर्वापरकालभेदेन प्रैषान्विभज्य ब्रूयातामेकस्मिन्वा काले प्राक्प्रत्यग्देशभेदेन स्थित्वेति विकल्पे प्राप्ते देशवाद एवायम् । आहवनीयं गच्छतीति प्रकृत्यैतदाम्नानात् । पाटलिपुत्रं गच्छतीत्यादौ तदधिकरणदेशस्योपस्थितत्वात् तेनोत्तरवेद्यामध्वर्युः सदसि मैत्रावरुणः प्रेष्यति ॥

## सू० ऋतुगृहेषु ॥ १४ ॥

प्रातः सवने ह्यादौ प्रस्थितयाज्यास्तदुत्तरकाले ऋतुयाजाः । उत्तरसवनयोस्तु प्रस्थितयाज्या एव नर्त्तुयाजा इति स्थितिः । तत्र प्रस्थितयाज्यास्विवर्त्तुयाजेष्वपि प्रैषानध्वर्युर्विभज्य ब्रूयात् । प्रैषाणामाध्वर्यवसमाख्यानादिति प्राप्ते प्रैषकाण्डोक्तनिगदोद्देशेन मैत्रावरुणः प्रेष्यति चानु चाहेति वचनेन प्रशास्तृवक्तृकत्वविधिः, स च प्रस्थितयाज्यासु व्यवतिष्ठते । पुनरभ्युन्नीतविधानेन समाख्याबाधान्मैत्रावरुण एव विभजेत् । होतर्यज पोतर्यजेत्यादीनां तत्तन्निगदान्त्यप्रतीकत्वेन निगदानेवोद्दिश्य मैत्रावरुणः पश्चादिति देशमात्रोक्तिः । तां पुरोऽध्वर्युरित्यत्र तूपप्रेष्य होतरित्यस्येव होतर्यजेत्यतावन्मात्ररूपाणां प्रैषाणामध्वर्युः सर्वैश्चमसैः सहाध्वर्युरादौ होतृयाज्यया हुत्वा ततस्तेषां मध्ये होत्रादीनां मध्यतः कांश्चिच्चमसानन्यत्र विनियुज्यावशिष्टचमसेषु सशेषेष्वेव पुनःसोममभ्युन्नीतैः क्रमेण मैत्रावरुणादिकतिपयहोत्रकयाज्याभिर्जुहोतीति स्थितिः । तत्र पुनरभ्युन्नीतहोमेष्वध्वर्युकर्तृकप्रैषगणमध्ये होतर्यज प्रशास्तर्यजेति श्रुतौ प्रैषौ तत्रत्यहोतृशब्देन मैत्रावरुण एवोच्यते । सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तहोत्राः प्राचीर्वषट्कुर्वन्तीति वचनेन तस्यापि याज्यायामधिकारात् । मुख्येन होत्रा प्रथमं वषट्कृतत्वाच्च प्रशास्तृशब्दस्यापि मैत्रावरुणवाचित्वात्तस्य प्रैषे द्वयोर्मन्त्रयोर्विकल्प इति कल्पसूत्रमतेन प्राप्ते सप्तहोतृप्रैषप्राये पठितयोर्होतृप्रशास्तृशब्दयोः प्रतिनियतनिर्देशादेव भिन्नार्थकत्वावसायान्म-

ध्यतः कारिचमसहोमीयमैत्रावरुणोक्तप्रैषान्त्यावयवे होतर्यजेत्यत्र होतुरेवोपस्थितत्वाच्च मुख्यहोतैवोच्यते ततश्चैकस्यां याज्यायां होतृप्रशास्त्रोर्वक्त्रोर्विकल्पः न त्वेकस्मिन्नेव प्रशास्तरि वक्तरि प्रैषयोर्विकल्पः । अथवा । मैत्रावरुणेनेवाध्वर्युणाऽपि होता प्रैषणीय इति न कोऽपि विकल्प इति ॥

## सू० आश्रुतप्रत्याश्रुते ॥ १५ ॥

अनुवषट्कारयागेऽपि यज्ञे यज्ञेऽन्वायत्त इति वीप्सया आवणादयो भवेयुः । यस्तु शाखान्तरे नाश्रावयतीति प्रतिषेधः सोऽपि च प्राप्तिपूर्वक एवेति प्राप्ते नु-शब्दश्रुत्यैव विप्रकर्षाभावोक्तेर्निवृत्तानामाश्रावणादीनामनुवाद एव प्रतिषेधः ॥

इति संकर्षे भाट्टदीपिकायां चतुर्दशाध्यायस्य तृतीयः पादः ॥ ३ ॥
अयं प्रैषपादः ।

---

# अथ चतुर्दशाध्याये चतुर्थः पादः ।

## सू० देवतायोगेन ॥ १ ॥

आग्नेयोऽष्टाकपालो भवति वैश्वदेव्यामिक्षेत्यादौ द्रव्यदेवतासम्बन्धमात्रश्रवणेन जुहोतेरश्रवणादारण्योत्सर्गादाविव त्यागमात्रं कर्तव्यं नाहुतिरिति प्राप्ते यजतेर्देवपूजादानान्यतरवाचित्वेन देवता गन्धादिभिरिज्यते विप्राय दीयत इत्यादौ च त्यज्यमानद्रव्यस्य प्रक्षेपान्तप्रतीतेर्देवताविग्रहाद्यभावेन परस्वत्वमात्रस्यानुत्पत्तावप्यस्त्येव प्रक्षेपः । अत एव मध्येऽग्नेराज्याहुतीः पश्वाहुतीः पुरोडाशाहुतीश्च जुहोतीति श्रुतिरुपपद्यते ॥

## सू० अदेवता ॥ २ ॥

श्रुतदेवताकेषु यागेषु देवतोद्देशमात्रसम्भवेऽप्यश्रुतदेवताकेषु तत्कल्पने मानाभावः । परस्वत्वोपादनांशस्येवोद्देशांशस्यापि विरहे स्वत्वत्या-

गमात्रेणापि यागत्वसम्भवात् । पूजादानशरीरकोटौ संप्रदानकारकस्यापि निवेशात्तदाक्षेपे त्वग्नित्वादिना तदनुपस्थितेराक्षेप्यतावच्छेदकदेवतात्व-पुरस्कारेण वा देवताया इदं न ममेत्यादिरूपस्त्यागोऽस्त्विति प्राप्ते सामान्यस्य प्रवृत्तावनुपयोगात्तत्तद्विशेषधर्मैरेव संप्रदानस्य यागशरीरघट-कत्वाद्विप्रसामान्याय दानस्याभावादग्न्यादिदेवतायाः शब्दद्वारैव यागो-पकारकत्वेन तद्वाचकपदेष्वग्निपदस्य नियमन इव देवतापदस्यापि शब्दविशेषरूपत्वेन तदुच्चारणनियमनेऽपि प्रमाणान्तरावश्यम्भावात्प्रजा-पते न त्वदेवतान्यन्य इति जुहुयादित्यादावपि मन्त्रप्रतिपाद्यस्य प्रजाप-त्यादेरेव देवतात्वम् । विशेषपर्यवसायकप्रमाणविधुरो देवतासामान्यघ-टितयागविधिस्तु नास्त्येव ॥

## सू० सूक्तवाकः ॥ ३ ॥

इध्मः प्रथम आहुतीनां हूयत इति वचनेन सामिधेनीभिरिध्मप्र-क्षेपस्यापि होमत्वावगमान्मान्त्रवर्णिकाग्नेर्देवतात्वं सूक्तवाक एव याज्या-प्रस्तर एवाहुतिरिति श्रुतेः प्रस्तरप्रहरणेऽपि यागत्वस्वीकारात् । प्रस्त-रस्योपयुक्तत्वेन तत्र प्रक्षेपांशस्य प्रतिपत्तित्वस्वीकारेऽपि प्रकृते समिधाम-तथात्वेन प्रयाजादिवदाराद्रुपकारक एवैष यागः । तेन प्रकृतिमन्त्रान्तः-पातिनिशीष्टौ प्रसङ्गादुपकारात्सामिधेनीलोप इति प्राप्ते यक्ष्यमाणया-गोपयोगित्वेन पूर्वमग्निसमिन्धनरूपदृष्टप्रयोजनसम्भवेनादृष्टार्थकत्वकल्प-नायोगात् । सामिधेनीषु ज्वलनस्यैव देवतात्वेन स्तवनसम्भवात्रार्थवाद-मात्रेण होमत्वसिद्धिः । प्रस्तरप्रहरणे त्विष्टदेवताप्रत्यभिज्ञानात्तासां हवि-र्भक्षणसम्बन्धलिङ्गाच्च यागत्वसम्भवेऽपि प्रकृते ज्वलनसमिन्धनस्यैव प्रति-पादनान्निशीष्टावपि सन्निपातित्वात्सामिधेन्यो भवेयुः । भाष्ये तु प्रस्तरप्र-हरणस्यापि केवलसन्निपातित्वमेव समर्थ्य पूर्वोक्तमाराद्रुपकारकत्वं कृत्वा-चिन्तयेत्युक्तम्, सूत्रे सूक्तवाक एव याज्येति श्रुतेर्ग्रहणं पूर्वपक्षे दृष्टान्तार्थ-त्वेन सुयोजम् ॥

## सू० आज्यानि ॥ ४ ॥

अग्नौ श्रुतम् अज्यानिरेतानुपदधात्यायथं निरूप्यैता आहुतीर्जुहोतीति शतायुधायेति पञ्चमन्त्राः प्राणभृन्न्यायेनाज्यानयः । उपधानकरणतायास्तद्वानासामिति स्मृत्यावगमेऽप्येता इति पदेनाहुतिकरणताया अप्रतीतेर्न मान्त्रवर्णिकदेवतासिद्धिः । होमे मन्त्रसम्बन्धस्तु क्रियमाणानुवादित्वादिनाऽप्युपपन्नः । देवता तु सामान्यपरिभाषानुसारेणान्यैव कल्प्यतामिति प्राप्ते एता इति पदेनेष्टकानां परामर्शेऽन्वादेश एना इत्यापत्त्याऽऽवश्यकेन ऋचां परामर्शेन तासामाहुतिपदसामानाधिकरण्येनान्वयानुपपत्तेरेवैताभिरिति विपरिणामावश्यम्भावादिन्द्राय एव देवताः । भाष्यकारैस्तु नेदमधिकरणमित्युक्तम् ॥

## सू० चित्रया ॥ ५ ॥

चित्रेष्टौ अथैता आहुतीर्जुहोतीति विधायैता वै देवताः पुष्टिपतय इति श्रुतं तत्रानियमेन केचित्पुष्टिलिङ्गा उपादेया इति प्राप्तेऽग्ने गोभिर्न आगहीन्द्रपुष्ट्या जुषस्व न इत्यादिमन्त्राणामेव क्रमेणाङ्गत्वात्पुष्टिलिङ्गत्वाच्च नानियमः ॥

## सू० दर्विहोमे ॥ ६ ॥

दर्विहोमेषु चतुर्गृहीतं जुहोतीत्यादि नियमानुपलम्भादनियतसंख्याकगृहीते प्राप्ते प्रथमं गृहीतेनापि होमसम्भवात्प्रथमोपस्थितन्यायेनैव संख्या नियम्यते । अत एव चतुरुन्नयति द्विर्जुहोतीति विधायाथ कथं द्वे आहुती भवत इत्यादिनोन्नयनचतुष्के होमचतुष्कस्यावश्यकता ध्वनितोपपद्यते ॥

## सू० गणेषु ॥ ७ ॥

यत्र बहवो दर्विहोमाः क्रमेण क्रियन्ते तत्रापि गणारम्भे सकृद्गृहीतस्य सर्वोद्देश्यकतया पशुत्रयपूर्वनिष्पन्नयूपस्येव तन्त्रता । न च हविषोऽपरिपूर्त्तिः । ध्रौवस्येव पुनःपुनराप्यायनसम्भवादिति प्राप्ते प्रथमहोमाव्यवहितपूर्वकाले गृहीतस्य गृह्यमाणविशेषत्वात्तदर्थतैव । आप्यायनं तु न वचनमन्तरोपपद्यत इति प्रत्याहुतिसकृद्ग्रहणम् ॥

## सू० समिदाधानम् ॥ ८ ॥

दर्विहोमेभ्यः पूर्वमग्निसमिन्धनस्यावश्यकत्वेऽपि न तत्र समित्प्रक्षेपनियमः । सामिधेनीष्विव नियामकाभावादिति प्राप्ते ऽग्निहोत्रप्रकरणे यद्देकां समिधमाधाय द्वे आहुती जुहोतीति विधाय कस्यां समिधि द्वितीयामाहुतिं जुहोतीति प्रश्नसरूपेण प्रत्याहुत्येकैकसमिदाधानस्यावश्यकताप्रापणान्नानियमः । अनियमेन प्राप्तस्यार्थस्यार्थवादादिना नियमनस्य बहुशो दृष्टत्वात् । अन्यथा स्रुवेणावद्यतीत्यादौ शेषिनियमो न स्यात् । अत एवैतस्याग्निहोत्रप्रकरणस्थत्वादर्थवादत्वाच्च न नियामकतेति केषाञ्चिन्मतम्भाष्य एव निरस्तम् ॥

## सू० पाकयज्ञः ॥ ९ ॥

पाकयज्ञ–शब्दस्याहुत्यादिशब्दवत्स्मार्तश्रौतसाधारण्येन यागमात्रवचनत्वे प्राप्ते मनुर्वै पाकयज्ञीय आसीत्स इममितरं यज्ञमपश्यदित्यादिना वाक्यशेषेण कतिपयाहुतिष्वेव शक्तिग्रहान्नाहुतिपर्यायता ॥

## सू० सर्वदर्वि ॥ १० ॥

पाकं निर्वर्त्य क्रियमाणो यज्ञ इति व्युत्पत्त्या सोमयागान्यनिखिलयागपरोऽयं शब्द इति प्राप्ते यद्वै चातुर्मास्यानां पाकयज्ञः सैव तद्देषां पशव्यं गृहमेधीयो ह्येषां पाकयज्ञेनेध्मा बर्हिर्भवति न सामिधेनीरन्वाह न प्रयाजा इज्यन्त इत्यादिनेष्टिकाङ्गानामभावबोधनेन दर्विहोममात्रवाचकः ॥

## सू० सर्वेषाम् ॥ ११ ॥

दर्विहोमत्वाविशेषाल्लौकिकवैदिकाग्निसाध्यानामखिलानां वाचक इति प्राप्ते लौकिकानामेव दर्विहोमानामेष वाचकः । शिबीनां पाकयज्ञ उशीनराणां पाकयज्ञ इत्यादेः स्मार्त एव व्यवहारस्य दर्शनात् । यदान्यस्य हविषः स्रुच्यवद्यति सर्वमेतदग्नौ जुहोतीति विधायाथ कस्माद् द्विर्जुहोतीत्यादिना तदस्य पाकयज्ञस्यैवेत्यनेन द्विर्होमादिनिर्लेहना-

न्तपदार्थाः पाकयज्ञीया अत्र क्रियन्त इत्याक्षेपेण वैदिकानामेषां न पाकयज्ञतेति ध्वननाच्च ॥

## सू० धर्मोपदेशः ॥ १२ ॥

पाकयज्ञकरणकभावनायाः कथं भावाकाङ्क्षायामाक्षेपलभ्यैः सन्निपातिभिरेवाङ्गानामिवाकांक्षानिवृत्तिरिति प्राप्ते द्विर्जुहोति द्विर्निमार्ष्टि द्विःप्राश्नात्युत्सृज्याचामति निर्लेढीति प्रकरणिनः शेषित्वेन विहिता अपि धर्माः पाकयज्ञेऽपि प्राप्नुयुः । यद्येतां नालभेत वायव्यस्यैव शिर उपदध्यादित्येकस्या एव श्रुतेः पशुशीर्षादिविकल्पवायव्यशीर्षापधानोभयप्रापकत्वदर्शनात् ॥

## सू० प्राचीनप्रवणे ॥ १३ ॥

वैश्वदेवपर्वणि प्राचीनप्रवणे यजेतेत्यधिकरणत्वेन विधानात्पदे जुहोतीत्यनेनाहवनीयवृत्तिरिति प्राप्ते पर्वतान्ते यजेतेत्यादाविव देशवाचकत्वात्तस्य च वैश्वदेवेनेति तृतीयया साङ्गप्रधानप्रयोगान्वयप्रतीतेः पदवाक्य इव जुहोतेरनुपादानाच्च न होमाधिकरणता किन्तु विहारदेशोपदेशः । अत एव यदेककपालमाहवनीये जुहोति यजमानमेव स्वर्गं लोकं गमयतीत्याहवनीयदर्शनमुपपन्नम् ॥

## सू० पदे जुहोति ॥ १४ ॥

पदे जुहोति वर्त्मनि जुहोति वल्मीकवपायां जुहोतीत्यादिष्वपि पूर्वन्यायेन देशमात्रविधात्तत्राहवनीयमुपनिधायैव होतव्यमिति प्राप्ते उत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायेत्यादाविव जुहोतिसंयोगेन होमाधिकरणत्वस्यैव विधानादाहवनीयनिवृत्तिः । अत एव चतुष्पथे जुहोतीति विधायैव वा अग्नीनां पड्वीशो नामाग्निवत्येव जुहोतीत्यनेन चतुष्पथस्यैव प्रकारान्तरेणाग्निमत्त्वोपपादानं सङ्गच्छते षड्वीशः पादबन्धनरज्जुः ॥

## सू० चतुष्पथे ॥ १५ ॥

चतुष्पथ एकोल्मुकमुपनिधाय जुहोतीत्यपि प्रकरणान्तरे श्रूयते। तत्र चतुष्पथस्यैवाग्निपदृग्नीशब्दरूपत्वेनाग्न्यन्तरानपेतत्वादेकोल्मुके वा केवलचतुष्पथे वा होम इति विकल्पे प्राप्तेऽग्निवत्ये*वेति मतुपः प्रशंसार्थत्वेन वास्तविकाग्निमत्ताया अबोधनेन विहितस्योल्मुकस्य त्यागे प्रमाणाभावान्न विकल्पः ॥

## सू० प्रत्यङ्‌ः ॥ १६ ॥

प्रत्यञ्चोवभृथेन चरन्तीत्यत्र विहारस्यैव प्रत्यङ्मुखत्वविधानम्। कर्तॄणां तु सामान्यविधिप्राप्तं प्राङ्मुखत्वमेव। तेषामपि प्रत्यङ्मुखत्वविधाने वाक्यभेदादिति प्राप्ते कर्तृगर्भकविहारस्यैव प्रत्यङ्मुखत्वविधानेन गजविपर्यावृत्त्या तत्सादिनामपि परिवृत्तेरिव कर्तॄणां प्रत्यङ्मुखतायाअर्थसिद्धत्वेनाविधानान्न वाक्यभेदः ॥

## सू० पुरस्तादपि ॥ १७ ॥

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहेत्यादौ मन्त्रान्ते पठ्यमान स्वाहाकाराणां प्रदानार्थत्वेऽपि स्वाहा वाचे स्वाहा वाचस्पतय इत्यादौ पुरस्ताच्छ्रूयमाणानां न तदर्थत्वं स्वस्थानप्रच्युतानां नखकुण्डलादीनां कण्डूयनालङ्करणादिकार्याक्षमत्वदर्शनात्। अतएवेशपदस्य गिरापदस्थान एव निवेशो द्विरावृत्तिश्च कल्प्यते। तस्मात्स्वाहा यज्ञं वातादारभ इत्यादाविव न होमार्थतेति प्राप्ते तत्र चतुर्थ्या अभावात्सम्प्रदानानिर्धारणेन होमार्थत्वाभावेऽपि वागादीनां चतुर्थ्यन्तत्वेन देवतात्वावगमादत्र क्वापि स्थितस्य दीपस्येव पदस्याप्यर्थप्रकाशकत्वानपायाद्ब्राह्मणाय देहि देहि ब्राह्मणायेति वाक्याभ्यामविशेषेण बोधानुभावाच्च प्रदानार्थतैव। अतएव पुरस्तात्स्वाहाकारा वा अन्ये देवा उपरिष्टात्स्वाहाकारा वा अन्य इति श्रुत्योभयेऽपि प्रदानार्थत्वमनूद्यते ॥

## सू० स्वाहाकृत्य ॥ १८ ॥

स्वाहाकृत्य ब्रह्मणा ते जुहोमि स्वाहाकृतमिन्द्राय ते जुहोमीत्यादावुक्तन्यायेन चतुर्थ्यन्तसमभिव्याहृतानां प्रदानार्थत्वे प्राप्ते प्रत्ययार्थे

* अग्निवत्येवेति पाठस्तु वैदिकः।

उपसर्जनत्वेनान्वितानां स्वाहाकाराणां मुख्यविशेष्यत्वाभावाद्द्रव्यस्तुतिद्वारैव वाक्यार्थसमवायाच्च प्रदानार्थता ॥

## सू० वषट्[1] ॥ १९ ॥

वषट् ते विष्णवा स आग्नेणोमीत्यत्र पदान्तरैः स्वाहाकृतशब्दवत्समासाभावेन स्वतन्त्रतया प्रदानार्थत्वे प्राप्ते आग्नेणोमीत्यत्र तदन्वयेनास्वातन्त्र्याविशेषाच्च तथात्वम् ॥

## सू० स्विष्टकृत् ॥ २० ॥

पशौ वनस्पतियागस्य स्विष्टकृद्विकारत्वाद्दार्शिकस्विष्टकृद्याज्यायामिष्टदेवतोपलक्षणनिगमानामुपलम्भाद्वानस्पत्ययाज्यायामपि ते स्युरिति प्राप्ते वानस्पत्यप्रैषनिगदे तासां सकृदुपलक्षितत्वेन पुनरुपलक्षणे मानाभावान्न स्युः । अत्रोपलक्षितत्वादेव च पाशुकस्विष्टकृद्याज्यायामपि नोपलक्षणीयाः । याजुषहौत्रकास्तु वनस्पतियाज्यायामपि पुनरुपलक्षणमभ्युपगच्छन्ति ॥

## सू० स्वाहेत्या[2]लेखनम् ॥ २१ ॥

चित्तं च चित्तिश्चाकूतं चाकूतिश्चेत्यादयो जयाः । इह धृतिः स्वाहेह विधृतिः स्वाहेत्यादयो धृतिमन्त्राश्च । एषु प्रथमान्तशब्दा होमार्थं प्रयोगकाले चतुर्थ्यन्तत्वेन विपरिणमयितव्याः । स्वाहाकारेण वषट्कारेण वा देवेभ्योऽन्नं प्रदीयत इति श्रुत्या ऽनुपात्तस्वाहाकारेषु स्वाहाकारस्येव नमः स्वस्ति स्वाहेति स्मृत्या चतुर्थ्या अप्यध्याहरणीयत्वात् । अतएव चित्ताय स्वाहेत्यादिरेव शाखान्तरे पाठ इति प्राप्ते छिनद्मीत्यादेरिवाश्रुतपदस्य पल्लवत्वसम्भवेऽपि श्रुतविभक्त्याः परित्यागे आम्नायत्वस्यैव भङ्गापत्तेः छन्दसि बहुलस्मृतेश्च यथासमाम्नानमेव प्रयोगः । अतएव धृतिहोमेन प्रयुङ्ज्याद्गोनामसु तथाऽष्टसु चतुर्थीमिति सूत्रमेतदधिकरणन्यायसिद्धार्थनिबन्धनम् ॥

---

१ वषट्ते इति तु पुस्तकान्तरे सूत्रपाठः ।

२ स्वाहेत्यालेखनः इति तु पुस्तकान्तरे सौत्रपाठः ।

## सू० चित्ताय ॥ २२ ॥

शाखान्तरीयमन्त्राणां विभक्तिभेदाच्चकाराभावाच्च भिन्नानुपूर्वीकतया मन्त्रभेदान्मन्त्रस्वरूपस्य यूपाहवनीयवदलौकिकत्वाददृष्टार्थानां समुच्चय इति प्राप्ते मन्त्राणामलौकिकशब्दत्वेऽपि जयात् जुहुयादित्यनेन होमकरणत्वेन विनियोगाद्दृष्टार्थतयैकार्थत्वाद्विकल्पः ॥

## सू० भूतानाम् ॥ २३ ॥

राजसूये पृथिव्यै स्वाहेत्यादयो मन्त्राः पठिताः । अग्निप्रकरणे तु पृथिव्यसि जन्मना च साग्निना गर्भमाधत्तामित्यादयो मन्त्रा आम्नाताः । उभयेषामपि भूतेति समाख्या भूतानामेवेष्टय इत्याकारकस्तत एवैनमवयजतीत्यार्थवादिको व्यवहारश्च तुल्य एव । ततश्च भूतेष्टका उपदधातीत्यनारभ्य विधौ विनिगमनाविरहादुभयेऽपि समुच्चिता विकल्पेन वोपादेया इति प्राप्ते कौण्डपायिनामयनस्थे नैयमिके च कर्मण्यग्निहोत्रपदसाम्येऽप्युत्सन्नयज्ञो वा एष यदग्निरुत्सन्नयज्ञो वा एष यदग्निहोत्रमित्यर्थवादसाम्येऽपि परस्परवैजात्यदर्शनात्प्रकरणपठितानां चित्रिणीरुपदधातीत्यादिवद्विनियोगान्तरादर्शनेन साकाङ्क्षाणामेवोपधाने विनियोगः ॥

## सू० मन्त्रागमे ॥ २४ ॥

यदि राजसूयस्थमन्त्राणामेव विनियोगः स्यात्तदा तत्रत्यस्वाहाकारानुन्मूल्यावशिष्टांशैरेवोपधानम् । तेषां प्रदाने सावकाशत्वात् । अश्रुतस्य स्वाहाकारस्य कार्यानुसारेण योजनवद्वियोजनस्यापि न्यायसिद्धत्वात् । लिङ्गेन पदैकवाक्यताया बाधादिति प्राप्ते मध्येचिन्ता ॥

## सू० प्रैषेण ॥ २५ ॥

ऋतुग्रहे होता यक्षदिन्द्रंहोत्रादित्यादीन् होतर्यजेत्यन्तान्प्रैषानाम्नाय प्रैषेण यजन्तीत्याम्नातम्, । तत्रापि यथासमाम्नातस्यैव मन्त्रत्वेन प्रदानाङ्गयोर्येयजामहेवषट्कारयोरङ्गाद्यन्तभागयोरिव योजनया प्रयोगे प्राप्ते होता यक्षद्धोतर्यजेत्यंशयोरनन्वितत्वेन तावुन्मूल्य तत्स्थाने तयोर्योगेन प्रयोगः ॥

## सू० स्यितादुत्तरम् ॥ २६ ॥

स्वाहेरोरन्तरिक्षादित्यादि मन्त्रेष्विव स्वाहाकारस्य प्रदानार्थत्वाभावेन स्वानाजिहीत इत्याद्यर्थान्तरपरतया वा वाक्यार्थेऽन्वयसम्भवेन मन्त्रत्वरक्षणाय यथाम्नानमेवोपधानम् ॥

## सू० ऋताषाट् ॥ २७ ॥

ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्मक्षत्रं पातु ता इदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहेति मन्त्रे स्त्रीपुंसलिङ्गकपदानां व्यतिषक्तानां यथार्थं विनिष्कृष्य मन्त्रद्वयीकृत्य होमद्वये विनियोगः ॥ या ते अग्न इति मन्त्रत्रये तनूरित्याद्यंशस्य सकृदाम्नातस्याप्यावृत्त्या विनिष्कर्षदर्शनात् । नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवीति मन्त्रस्य होमे विनियोगे पृथिव्यन्तरिक्षद्युपदानामन्नवातवर्षपदैर्व्यतिषक्तानामपि विभजनदर्शनादिति प्राप्ते स्वाहापदस्य सकृदाम्नानानाम्नानाभ्यां मन्त्रान्तरयोराकाङ्क्षावशेन होमसंख्यावशेन च तत्र तत्र विनिष्कर्षेऽपि द्विराम्नातस्वाहाकृतया ताभ्यः स्वाहेति मन्त्रस्य निराकाङ्क्षतया च तावानेव भिन्नो मन्त्रः । तच्छब्दबलेन ता इदमित्यादेरपकर्षे तत्तच्छब्दवशेन सर्वांशस्यापकर्षापत्त्या तस्मै ताभ्यः स्वाहेति पाठेनैव तादृशमन्त्रद्वयसिद्धा स्वाहाकारान्तरवैयर्थ्यापत्त्यैव तावन्मात्रस्य भिन्नमन्त्रत्वानुमानात् ॥

## सू० षड् जुहोति ॥ २८ ॥

आकूत्यै प्रयुजेऽग्नये स्वाहेत्यादय आकूतिमग्निं प्रयुजं स्वाहेत्यादयश्च होमलिङ्गाः षट् षण्मन्त्रा आम्नाताः । तत्र षड् जुहोतीति श्रूयमाणो विधिरन्यतरषट्कस्य होमेषु विनियोगार्थमाहुतिवाद एवेति प्राप्ते द्वयोर्द्वयोः सजातीययोरेकीकरणेन द्वादश जुहोतीति वचनान्तरविहितानामेव सावित्राणि जुहोतीतिवत्पर्यायवादः ।

## सू० भुवनस्य ॥ २९ ॥

भुवनस्य पत इति रथमुखे दशाहुतीर्जुहोतीति विधावेव शाखान्तरे पञ्चाहुतीरिति पठ्यते, तत्र शाखाभेदाद्विकल्पे प्राप्ते भुवनस्य पते स नो भुवनस्य पते इत्यनयोर्द्वयोर्द्वयोरैकरूप्यादेकपर्यायीकृत्य पञ्चेति वादः । अथवा दशसु पञ्चानामवयुत्यवादो यदष्टाकपालो भवतीतिवत् । शाखान्तरीयस्याप्युपसंहारेणैकवाक्यतोपपत्तौ वाक्यभेदविकल्पयोरन्याय्यत्वात् ॥

## सू० स्वाहाकारः ॥ ३० ॥

भूतं भव्यं भविष्यद्वषट् स्वाहा नम ऋग्य[1]जुःसामवषट् स्वाहा नम इत्यादौ वषट्कारस्वाहाकारनमस्काराः प्रदानार्थाः । भूतादित्रयेण यथाक्रममन्वयेन त्रिमन्त्रीत्वसम्भवादिति प्राप्ते सामान्यसंबन्धकारिप्रमाणाभावेन केवललिङ्गेन होमानां कल्पनायोगाद् भूताद्युद्देशेन वषडाद्यभेदकथनस्य स्तुत्यर्थत्वेनोपपत्तेश्च मुष्टिकरणमन्त्रस्यस्वाहाकारवदेतेऽपि न प्रदानार्थाः ॥

इति श्रीसंकर्षे भाट्टदीपिकायां चतुर्दशाध्यायस्य चतुर्थः पादः ॥ ४ ॥

चतुर्दशोऽध्यायश्च समाप्तः ॥

अयं च होमपाद इत्युच्यते ।

---

## अथ पञ्चदशाध्याये प्रथमः पादः ॥

---

## सू० विक्रमसन्निपातौ ॥ १ ॥

[2]यदा पौर्णमास्यमावास्या चाहन्येव खण्डा सती समाप्यते तदा तत्पूर्वेद्युरेव पर्वणोरहोरात्रव्याप्तिसत्त्वात्पौर्णमास्यमावास्याशब्दयोरहोरात्रव्याप्तकालवाचित्वात्पौर्णमास्यां पौर्णमास्या यजेतेत्यादिवचनेन तत्रैव दर्शपूर्णमासयोरनुष्ठानमिति प्राप्ते सूर्याचन्द्रमसोर्विप्रकर्षसन्निकर्षोभयस्यैव तत्तत्पदप्रवृत्तिनिमित्तत्वात्तस्य च परदिन एव लाभात्परेद्युरेवानुष्ठानम् । पूर्णो मासो यस्मिन्काले स पूर्णमासः तत्पूर्तिश्च पौर्णमास्यन्त्यक्षणे। तदैव पुष्य-

---

१ नम ऋक्सामयजुर्वषट्स्वाहेति तु वैदिकपाठः ।
२ न पूर्वेद्युरिति पा० ।

वन्तयोरतीव विप्रकर्षः । अमा सह समीपे वा वसतस्तौ यस्मिन्काले सा-मावास्या । तत्सन्निकर्षोऽपि तदन्त्यक्षण एवातिशयित इत्यसंकुचितवृत्तिकयोः पदयोस्तत्रैव प्रवृत्तिः । सौत्रं तत्संयोगादिति पदं यौगिकवृत्त्या तथैव प्रतीतिरित्येतत्परम् । संधौ यजेतेति श्रुत्यन्तरे तस्यैव कालस्य विनियोगेनोपसंहारादिति वार्थः । विक्रमः संनिपाततश्च यागकाल इति शिष्टाः स्मरन्तीति भाष्यं न शिष्टाचारस्मृत्यन्यतरपरम् । अपि त्वमावास्यादिपदनिर्वचनपरम् । तथैव निर्वचनस्य स्मृतिष्वप्युपलम्भादिति भावः ॥

## सू० द्व्यविज्या ॥ २ ॥

सन्धिकालस्याल्पत्वेन साङ्गप्रयोगभावनापर्याप्तत्वाभावेन तत्पर्याप्तये समं स्यादिति न्यायेन तत्पूर्वपरभागयोः समयोराक्षेपात्संधिमभितो यजेतेति श्रुतेश्च यदैव सन्धिरपराह्णे रात्रौ वा पतति ततःपूर्वं घटिकाद्वयमारभ्य तत्पश्चाद् घटिकाद्वय इष्टिं समापयेदिति प्राप्ते द्व्यविज्याकालौ वचनाद्व्यवतिष्ठेते । पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्देवता यजत इति वचनेन प्रयोगस्य द्व्यहकालत्वावगमात् । पूर्वां पौर्णमासीमुपवसेदिति पैङ्ग्यमुत्तरामुपवसेदिति कौषीतकं या पर्यस्तमयमुत्सर्पेदिति कौषीतकिब्राह्मणे सूर्यास्तमयं परित इत्यनेनावर्त्तनात्परतो रात्रौ वा यदि सन्धिः सोपवासार्होत्तरा पौर्णमासी तस्यामन्वाधानमित्युक्त्या ततः परेद्युर्याग इत्युक्तं भवति । आवर्त्तने ततः पूर्वं वा यदि सन्धिः सोत्तराऽपि नोपवासार्हा किंतु पूर्वैवेत्युक्त्या सन्धिदिन एव याग इत्यपि व्यवतिष्ठते । तेन संधिमभित इत्यस्य विद्युद्दृष्टिमध्ये यथा सन्धिः पतति तथा तन्त्रं प्रक्रमेदित्यर्थः । आवर्त्तने यदा संधिः पर्वप्रतिपदोर्भवेदित्यादीनि प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यत इत्यादीनि च गोभिलगार्ग्यादिवचनान्येतमेवार्थं विवृण्वन्ति ॥

## सू० रात्रौ ॥ ३ ॥

परेद्युरपि रात्रावेव यागः कार्यः । तस्मात्सदृशीनां रात्रीणाममावास्यायां च पौर्णमास्यां च देवा इज्यन्त इति श्रुतौ रात्रीणामिति निर्धा-

रणषष्ठ्या ब्राह्मणानां मध्ये यज्ञदत्तः सुरूप इति वाक्येन यज्ञदत्ते ब्राह्मणत्वस्येव पौर्णमास्यादे रात्रित्वस्यावगमात् । दर्शादृष्टेत्यनुवाके पौर्णमासीदर्शपदयो रात्रिनामत्वोक्तेश्चेति प्राप्ते दिवस एव यागः कर्त्तव्यः प्रातर्यजध्वमिति श्रुत्या पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः । यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिरिति वृद्धशातातपविवृतया उत्तरमहरिति श्रुतेरुपसंहारात् । शुक्लप्रतिपदात्रिवाचिकस्य दर्शापदस्येहानुपयोगाच्च । तन्त्रप्रक्रमस्य रात्रावपि कदाचित्सम्भवाभिप्रायेण रात्रीणामिति श्रुतेरुपपत्तेः । रात्रिशब्दस्य द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत दशरात्रमाशौचमित्यादावहोरात्रपरत्वदर्शनाच्च । यत्तु भाष्ये पुण्याहे दैवानि कर्माणि ते वा एते पूते मेध्ये अहनी यजनीये उत्तरमहर्देवता यजत इति श्रुतिष्वह्नामेव कीर्त्तनमिह हेतूकृतम् । तत्तन्त्रप्रक्रमाभिप्रायेणाहोरात्रपरत्वेन चान्यथासिद्धो रात्रिशब्द इति वदतः सूत्रकृतो विरुद्धम् । अहः-शब्देऽपि तदुभयसम्भवात् ॥

## सू० उदिते ॥ ४ ॥

अन्वाधानमात्रस्य वचनादन्यकालत्वेऽपि तदितरतन्त्रप्रक्रमस्य कालभेदे मानाभावादङ्गानां प्रधानसमानदेशकालत्वनियमादहन्येव प्रक्रम इति प्राप्ते यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियादित्यभ्युदितेष्टेर्निमित्तत्वेन कीर्त्तनान्यथानुपपत्त्या दर्शेष्टेर्निश्यपि प्रक्रमस्य कल्पनावश्यम्भावात्पौर्णमास्यां च कल्पकाभावादुदित आदित्ये तन्त्रप्रक्रमः प्रागुदयादमावास्यायाः ॥

## सू० यजनीये वा ॥ ५ ॥

उक्तरीत्यैवान्वाधानस्य तदितरतन्त्रप्रक्रमस्य च कालभेदे नित्यं प्राप्ते यजनीयेऽप्यहनि वैकल्पिकस्तत्प्रक्रमो भवेत् । तदेतत्स्मृतिष्वेव व्याख्यातम् । सन्धिश्चेत्सङ्गवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः । सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिरिति कातीयवचनात् । आवर्त्तनात्प्राग्यदि पर्वसन्धिः सत्र[1]स्तदा वा क्रियते समस्तमिति संग्रहादिषु द्रष्टव्यम् । भाष्ये त्वेतत्सूत्रं रात्रीज्याधिकरणगुणसूत्रत्वेन व्याख्यातम् । अहर्यजनीयः कालो न रात्रिरित्युक्तम् । तदहन्येव यजेतेति तच्चिन्त्यम् ॥

---

१ सद्यस्तदा वेति पा० ।

## सू० एतेन सोमकालः ॥ ६ ॥

सोमयागे दीक्षादिदीक्षान्ताङ्गानां कालभेदस्य वाचनिकत्वेऽपि सौत्याहतन्त्रस्य पर्वसन्धिदिवस एव वा दिनान्तरे वा करणमिति विकल्पे प्राप्ते सन्धिदिन एव सुत्या सर्वा स्यात् । सन्धिकालस्याल्पत्वेऽपि तदाक्षिप्तपूर्वापरकालयोः कर्मसंबन्धस्यावर्जनीयत्वात् । तद्बाधकवचनस्याप्यप्रत्यक्षत्वात् तदेतदाह विक्रमसन्निपातयोर्व्याप्त्या तत्संयोगाच्च ह्यन्यत्प्रत्यक्षं विद्यत इति । प्रत्युत कौषीतकीवचनं प्रत्यक्षमेवेत्युक्तं त्रिकाण्डमण्डने । खण्डपर्वणि सोमश्चेत्प्रतिपन्मिश्रपर्वणि । सोमसुत्या प्रयोप्रयोक्तव्येत्याह कौषीतकिश्रुतिरिति । भाष्यकृता तु द्वाविज्याकालाविति सूत्रेण यदहरेव पुरस्तान्न पश्चान्न दृश्यते तदहरुपवसेच्छ्वोभूते यजेत या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राकेत्यादि वचनैर्द्वावपि यागकालावेवेति पूर्वपक्षं प्रापय्यानेन सूत्रेण तेषां प्रत्यक्षतः कालद्वित्वबोधकताभावाद् द्वादश वै संवत्सरस्य पौर्णमास्य इत्यादिलिङ्गाच्चैकैक एव काल इति सिद्धान्तितम् ॥

## सू० यदि मन्येत ॥ ७ ॥

नान्यद्द्विरन्तरं निर्वपेत्पौर्णमासीमेव श्वोभूते यजेतेत्यनेनान्वाधानप्रधानयोर्मध्ये इष्ट्यन्तरनिषेधस्त्वविशेषात्सर्वेष्टीनामिति प्राप्ते न हि कर्मण्युपक्रान्ते तदसमाप्य कर्मान्तरमारब्धुं युक्तम् । अतो न प्राप्तमेव नित्यं काम्यं वा कर्म नैमित्तिक्य एव त्विष्टयो निमित्तानन्तरभावित्वात्प्रसक्तास्तास्वयं निषेधः, तास्वपि याः क्रत्वङ्गभूतास्ता भवेयुरेव पुरुषार्थभूतानां तु क्षामेष्ट्यादीनां पर्वान्तरे करणमिति ॥

## सू० न यवानाम् ॥ ८ ॥

तासामितरेणेति श्रुतौ ग्राम्यौषधीनां मध्ये व्रीहिधान्येनाग्रयणं विधाय संवत्सराद्येतदधिभवतीति श्रुतम् । तत्रेतरेणेत्येकवचनाद्व्रीहिधान्यकमेवाग्रयणमत एव संवत्सरोत्तरमेव पुनः करणश्रुतिरुपपद्यते वसन्ते यवैराग्रयणकरणे तु वत्सरमध्य एव तदावृत्तेस्तद्विरोधः । अतो नास्त्येव

यवाग्रयणमित्यौडुलोमिराचार्यो मन्यत इति प्राप्ते स्यादेव यवाग्रयणम् । उभाभ्यामाग्रयणेन यजेतेति श्रुतेः । न चेयं फालकृष्टाफालकृष्टविषया तस्मात्तासामुभाभ्यामग्निहोत्रं जुहोत्युभाभ्यां दर्शपूर्णमासाभ्यां यजत इत्यत्र व्रीहियवयोरेव प्रकृतत्वात् । अस्याश्च तत्प्राये पाठात् । व्रीहिसस्ये वा यवसस्ये वा गत इति स्पष्टं कौषीतकिश्रुतेश्च । संवत्सराद्धो तद्वेति तु व्रीह्याग्रयणपरत्वेनाप्युपपन्नम् । अत एव द्विर्वा एष आदित्यः संवत्सरादावर्त्तते तमेताभ्यामाग्रयणाभ्यामर्वाञ्चञ्च पराञ्चञ्चाभियजत इति श्रुतौ प्रत्ययनमाग्रयणोक्तिः । व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत यवेभ्यो यवैरिष्ट्वा यवैरेव यजेत व्रीहिभ्य इत्यनेन तत्तदाग्रयणोत्तरभाविदर्शपूर्णमासयोर्द्रव्यनियमश्च । श्यामाकव्रीहियवानां प्राशने मन्त्रत्रयविधानं चेति संगच्छते ॥

## सू० सर्वेषां प्राशन्यः ॥ ९ ॥

अग्निः प्रथमो भद्राग्नः श्रेय एतमुत्यमिति विहिता भक्षकरणत्वेन मन्त्राः सौमिकेषु भक्षेषु भक्ष हीति मन्त्रवत्प्राकृतेषु सर्वेषु भक्षेषु भवेयुरिति प्राप्ते सोमस्यापूर्वत्वेन मन्त्रविधेस्तदीयसर्वभक्षेष्वन्वयेऽपि प्रकृते चोदकतः समन्त्रकभक्षा ये प्राप्तस्तेषामेव मन्त्रशेषित्वेन हिरण्यगर्भमन्त्रस्यैन्द्राग्नार इव तेष्वेव मन्त्राणां प्राप्तिः ॥

## सू० अनिष्टाग्रयणस्य ॥ १० ॥

तस्मान्नानिष्ट्वाऽग्रयणेन नवस्याशितव्यमिति निषेधः फालकृष्टारण्याशनस्यैव न व्रीहियवाशनस्य याः फालकृष्टास्तासामितरेणेति वाक्यशेषे फालकृष्टकीर्त्तनेन विशेषे व्यवस्थापनात् । तस्मात्फालकृष्टातिरिक्तानां ग्राम्याणां भक्षणं नि[१]यतमिति प्राप्ते ऽञ्जनस्य द्रव्यसामान्येन करणासंभवेन प्रवृत्तेर्विशेषैकविषयकत्वेन सामान्यस्य विशेषे पर्यवसानाय वाक्यशेषावश्यकत्वेऽपि निवृत्तेर्नैवधान्यसामान्याशनविषयकत्वानुपपत्तेरभावे न

१ भक्षणमनियतमिति प्राप्ते इति पा० ।

विध्यायवानाकाङ्क्षितस्य वाक्यशेषेणासमर्पणात् फालकृष्टार्थवादः छत्रिव-त्लक्षणया स्तावकमात्रमिति सर्वग्राम्याणामेव भक्षणप्रतिषेधः ॥

## सू० शाकापक्वौषधीनाम् ॥ ११ ॥

सस्यं नाश्नीयादिति वचनान्तरेण शाकादीनामपि भक्षणनिषेधे प्राप्ते तेषां यागयोग्यत्वाभावेन देवा ओषधीषु पक्वास्वाजिमीयुस्तानीं-द्राग्नीप्रथममुदजयतामित्युपक्रम्य नवाशननिषेधेन देवेभ्यो दातुं योग्यानां धान्यानां पक्वानामेव तैस्तेभ्योऽनिष्ट्वा भक्षणस्य निन्दया पक्वशाकानां हरि-तयवादीनां भक्षणे याथाकाम्यम् ॥

## सू० तेन शमी ॥ १२ ॥

मुद्गादिशमीधान्यानामपि पक्वौषधित्वाविशेषेण निषेधे प्राप्ते तेषा-मयागयोग्यत्वादेव न निषेधः ॥

## सू० प्राशितयवः ॥ १३ ॥

वसन्ते नवान् पक्वयवान्प्राशितवता पश्चादग्न्याधाने कृतेऽपि यवाग्रयणं कर्त्तव्यम् । पूर्वमधिकाराभावेऽपि सम्प्रत्यधिकारसम्पत्त्या तत्प्रा-प्तेरिति प्राप्ते नवान्नप्रथमप्राशनस्यैवानिष्टाग्रयणं प्रति प्रतिषिद्धत्वात्तस्य च वृत्तत्वेन द्वितीयादिप्राशने निन्दाभावेन तादृशस्य न तत्राधिकारः ॥

## अविद्यमानबुभुक्षः ॥ १४ ॥

नवान्नाशनस्य बुभुक्षातल्लाभोभयपूर्वकत्वेनान्यतराभावे दृष्टिपरि-मितनवान्नलाभेऽपि नैवाग्रयणेऽधिकारः । तस्यानिष्टाग्रयणत्वेऽपि प्रति-षेधातिक्रमाभावेन प्रत्यवायाभावादिति प्राप्ते नवान्नप्रथमाशनप्रागभाव-विशिष्टवसन्तादिकालजीवित्वस्यैवाधिकारितावच्छेदकत्वेन बुभुक्षादेस्त-द्घटकत्वेन मानाभावादप्रतिहतोऽधिकारः ।

## सू० अत्राग्रयणाभ्यासः ॥ १५ ॥

व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत यवेभ्य इत्यनेन व्रीहिकालयव-कालान्तराले व्रीह्याग्रयणाभ्यासो विधीयते । यजि-शब्देन प्रकरणेन

एवोपस्थितेरिति प्राप्तेऽन्तरालकाले नित्यप्राप्तयोर्दर्शपूर्णमासयोर्द्रव्यनियमविधिपरत्वे सम्भवत्यत्यन्ताप्राप्ताभ्यासपरत्वप्रयुक्तं । व्रीहिभिरेवेत्येवकारेण यवनिरासप्रतीतेः ॥

## सू० सविकल्पः स्यात् ॥ १६ ॥

आग्रयणेनान्नाद्यकामो यजेतेति विधाय वाक्यान्तरेण कालानां द्रव्याणां च विधानादग्निहोत्रद्रव्याणामिव विकल्पः स्यादिति प्राप्ते प्राप्तोद्देशेन कालद्रव्याद्यनेकगुणविधाने वाक्यभेदाद्विशिष्टविधित्वावश्यम्भावेन त्रयाणामप्याग्रयणानामभ्यासाद्भेदः । नैमित्तिकानामप्यन्नाद्यकामवाक्येन काम्यतापि । कौषीतकिब्राह्मणे तु श्यामाकाग्रयणं विधाय सप्तदशसामिधेन्यः सद्वन्तावाज्यभागावित्यादिना प्राकृताङ्गान्युद्दिश्य गुणविशेषान्विधाय यवाग्रयणादींस्ततो विधायैतत्तन्त्रमेवैतद्ब्राह्मणमिति वाचनिकातिदेशकथनात्स्पष्टः कर्मभेदः, अतो न द्रव्यविकल्पः । नापि कर्मविकल्पः, निमित्तभेदात् । द्विर्वा एष आदित्य इत्यादिनाऽयनभेदेनावृत्तिश्रुतेश्च ॥

## सू० सस्यपक्तेर्वा ॥ १७ ॥

संवत्सराद्धे तदधिभवतीति श्रुतौ द्वादशमासाः संवत्सर इत्यादिश्रुत्यन्तरसिद्धत् चान्द्रादिसंवत्सरान्यतम एव विकल्पेन ग्राह्य इति प्राप्ते संवत्सरे सस्यानि पच्यन्त इत्यादिषु लोके परुत्सस्यपाकाद्यैषमः सस्यपाकावधिकालस्यापि संवत्सरत्वेन व्यवहारात्सस्यपाकनिमित्तकर्मसु तस्यैवोपस्थित्या नियमनसम्भवे विकल्पायोगाद् द्वादशमासन्यूनातिरेकयोरपि संवत्सरा दधीति वादः ॥

## सू० पार्वणमासानि ॥ १८ ॥

फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते इत्यनेन चातुर्मास्यारम्भं विधाय चतुर्षु चतुर्षु मासेष्वन्यानि पर्वाणि विहितानि । तेषु मासानामपि चान्द्रादिभेदेनानेकविधत्वादन्यतमोपादाने यज्ञादौ सावनः स्मृत इति स्मृत्या त्रिंशद्वै रात्रयो मासा इति प्राकरणिकश्रुत्या च गवामयनादाविव

सावनमास एव वा प्राप्ते चान्द्र एव मासो ग्राह्यः । पञ्च सांवत्सरिक-प्रयोगे त्रीनिष्ट्वा चतुर्थमुत्सृजेद् द्वौपराविष्ट्वा तृतीयमुत्सृजेदेष वै त्रयोदशो मासस्तमतियजत इत्येकमासत्यागस्योत्सृज्योभौ मासावित्यनेन मासद्वय-त्यागस्य च विधानात् । मातुलातुलविमलसंख्याका हि सौरसावनपार्व-णवत्सराणां दिवसाः । तेन षष्ट्या सौरैर्मासैरेकषष्टिः सावना द्विषष्टिः पार्वणामासा भवन्ति । सौराभिप्रायेण मासद्वयोत्सर्गस्य सावनाभिप्राय-णैकमासोत्सर्गस्य च कथनेन चान्द्रमासस्यैवोपादेयत्वमवसीयते अन्यथा विकल्पाद्यापत्तेः ॥

## सू० मासो वा ॥ १९ ॥

त्रीनिष्ट्वेति वाक्ये संवत्सरत्रयं चातुर्मास्यैरिष्ट्वा चतुर्थत्यागविधा-नाच्चतुर्थपदेनैकः संवत्सर एवोपरमणीयत्वेन प्रतीयत इति प्राप्ते चतुर्थ-शब्दोऽत्र मासपर एव । एष वै त्रयोदशो मास इति श्रुत्यन्तरात् । चतु-र्थमिति सप्तम्यर्थे द्वितीया । एवमेव द्वौ पराविष्ट्वेत्यत्रापि ज्ञेयम् ॥

## सू० आदेर्वा ॥ २० ॥

षष्ठस्य कर्मण आरम्भप्रतिषेधोऽयं पञ्चभिर्वर्षैः कर्मापवर्गादिति प्राप्ते पञ्चसांवत्सरिकपक्षवद्यावज्जीवाभ्यासपक्षोऽपि विज्ञायते । स त्रिषु त्रिषु संवत्सरेषु मासं मासमुत्सृजेदिति वचनात् । पञ्चसांवत्सरिकातिरिक्त-पक्षाभावे त्रिषु त्रिष्वित्याद्यभ्यासानुपपत्तेः ॥

## सू० पञ्चवत्सरेषु ॥ २१ ॥

पञ्चसांवत्सरिकातिकप्रयोगारम्भे विहितानां वैश्वानरपार्जन्यप-ञ्चहोतृहोमानां षष्ठे संवत्सरे प्रयोगान्तरारम्भात्पुनः करणमिति प्राप्ते चातुर्मास्यान्यारभमाण इति श्रुत्या चातुर्मास्यविषयकप्रथमप्रवृत्तेरेव कर्तृ-विशेषणत्वेन कीर्त्तनात्प्रयोगान्तरारम्भस्य चातथात्वादारम्भणीयावत्स-कृदेव ॥

## सू० यदि वसन्ता ॥ २२ ॥

चातुर्मास्येष्वेव यदि वसन्ता यजेत द्विरुपस्तीर्य द्विरभिघारयेदित्याद्युपक्रम्य यदि प्रावृषि यजेत सकृदुपस्तीर्य द्विरभिघारयेदिति श्रुतं। तत्र वसन्तकाले क्रियमाणस्य वैश्वदेवपर्वण उपस्थितत्वाद्यदि प्रावृषीति वाक्येऽपि यजिना तदेवोच्यते। तस्यैव पशुकामप्रयोगे आपशुप्राप्तेरभ्यसनीयत्वेन वर्षास्वपि तत्प्रसक्तेरिति प्राप्ते प्रावृषि वरुणप्रघासैरिति विधिप्रतीतासाधारणलिङ्गेन वरुणप्रघासानामेवोपस्थितत्वादेष वादः। चातुर्मास्यत्वेन तेषामपि प्रकृतत्वात्। अप्रकृतत्वेऽपि वा जटिलम्भोजयेदित्यादौ जटाविशिष्टस्येव प्रतीतिसम्भवाच्च॥

## सू० वैश्वदेवेन॥ २३॥

वैश्वदेवेन पशुकामो यजेत यस्मिन्नृतौ प्रभूतं गोषु पयः स्यादितिश्रुत्या वसन्तानादरप्रतीतेर्ऋत्वन्तरेऽपि स्वायां गवि पयोवृद्धौ सत्यां काम्यप्रयोगारम्भः स्यादिति प्राप्ते यस्मिन् काले बहुव्रीहिः स्यात्तदा यष्टव्यमित्युक्ते विहितकालत्यागस्याप्रतीतेर्यस्मिन्वर्षे वसन्ते प्रभूतं पयः स्यात्तस्मिन्नेव वसन्त इज्येत॥

## सू० वैश्वदेवस्य॥ २४॥

तत्रैव पशुकामप्रयोगेन वरुणप्रघासैरित्यादिना पर्वत्रयनिषेधाः श्रूयन्ते। न स्वातन्त्र्येण फलार्थतया तैर्यजेत किं त्वङ्गत्वेनेति तदर्थः। अन्यथा प्रतिषेधे विकल्पस्य पर्युदासे वाक्यवैयर्थ्यस्यापातात्। तेनाङ्गानां प्रधानसमकालत्वाद्वसन्त एवेतराणि पर्वाणि कुर्यादिति प्राप्ते तत्तत्कालेष्वपि वैश्वदेवस्याभ्यासविधानार्थाः प्रतिषेधवादाः। आपशुलाभादभ्यस्य पश्चाद्यथाकालं तैरपि यजेत। यदा सहस्रं पशूनाप्नुयादथ वरुणप्रघासैर्यजेतेत्यादि श्रुतेः॥

## सू० मासमग्निहोत्रम्॥ २५॥

मासं दर्शपूर्णमासाभ्यामित्यादिवाक्यविहितदर्शादेः प्रकृतिप्राप्तकालानुग्रहाय त्रिंशत्पर्वस्वनुष्ठानं चत्वारोऽभिप्लवा एकः पृष्ठ्यः समास

इत्यादौ त्रिंशत्कर्मस्वपि मासपदप्रयोगादिति प्राप्ते मासं त्रिवृतेत्यादि प्राये पाठादत्यन्तसंयोगद्वितीयया च सन्ततमेव याग इति ॥

इति संकर्षे भाट्टदीपिकायां पञ्चदशाध्यायस्य प्रथमः पादः ॥ १ ॥

अयं च कालपाद इत्युच्यते ॥

---

## अथ पञ्चदशाध्याये द्वितीयः पादः ।

### सू० तत्सर्वार्थम् ॥ १ ॥

आधाने ब्रह्मौदनिकेऽग्यावरुणी सन्ताप्य तदुपोह्य भस्माग्निं मन्थति सैव साग्नेः सन्ततिरिति मथनमाम्नातम् । तच्च सर्वाग्न्य अविशेषात् ॥

तेन मथित्वा विभज्य सर्वेऽग्नय आधीयेरन्निति प्राप्ते ब्राह्मौदनिकाग्नौ गार्हपत्यत्वश्रवणात्तेन सम्वत्सरमासीतेति सम्वत्सरपर्यन्तमेकस्यैवाग्नेर्धारणश्रवणाच्च कृत्स्नेन निर्मन्थितेन गार्हपत्य एवाधेयः ॥

### सू० लोकतः ॥ २ ॥

अन्येऽग्नयो व्रीह्यादिद्रव्यवल्लोकत एवाधीयेरन्निति प्राप्तेऽयं चापरो भूरसौ पूर्वो भुवस्तमपरमधात्त एष ह्येतस्य योनिरेतस्माद्देवोऽधिप्रणीयत इति श्रवणाद्गार्हपत्यादेवाहवनीयाधानम् ॥

### सू० आहवनीयात् ॥ ३ ॥

सभ्यावसथ्ययोराहवनीयादाधानं स्यात् ॥ भूर्भुवः सुवरित्युभावेतौ सहाधत्ते स हि तस्य योनिरिति श्रुतावुभाविति पदेन गार्हपत्याहवनीययोरुपादानोपादेययोः सहाधानाभावेन परामर्शायोगात्सभ्यावसथ्यपरत्वस्य वक्तव्यतया सहितस्येत्यस्य साहित्यवदुभयपरत्वेनाहवनीययोनिकत्वश्रवणात् । यदेव तृतीयं ज्योतिस्तदेव तेनाप्यत इत्याहवनीयं प्रकृत्य श्रुत्यन्तराच्चेति प्राप्ते तृतीयज्योतिःपदस्योत्तरवेदिकाग्निपरत्वात्सहितस्येत्येकवचनेन सहिताग्निद्वयपरत्वाल्लोकयोगेन सगार्हपत्यस्त-

स्याहवनीयस्य योनिरित्येव तदर्थक्तया ऋत्विजामिव तयोर्लौकत एव प्रक्लृप्तिः ॥

## सू० आम्नातत्वात् ॥ ४ ॥

दक्षिणाग्निशब्दस्यापि दिक्पदघटिततया दक्षिणदिशः सकाशादाहृतलौकिकाग्निपरत्वाल्लोकत एव क्लृप्तिरिति प्राप्ते निर्मन्थ्याद्दक्षिणाग्निमादधीतेति शाखान्तरे श्रवणाद्गार्हपत्यस्यसर्वयोनित्वात्तत एवाधानम् ॥

## सू० व्याख्यातम् ॥ ५ ॥

सर्व एवाग्नयो निरन्तरं जागरणीयाः प्रतिदिवसं तेषां कर्मोपयोगात् ॥ द्रव्यस्याकर्मकालनिष्पत्तेरिति न्यायात् । आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति प्रतिपत्तिविधानाद्यज्ञपात्रवदेवाग्नीनामपि प्राक्प्रतिपत्तेर्धारणमिति प्राप्ते कर्मापवर्गे दक्षिणाग्न्याहवनीयावनुगच्छेताम् । नान्तराग्नी वीयादिति निषिध्य कामंहुते सञ्चरेत्पश्चाद्धि स तर्हि गत इत्यनेन होमोत्तरमाहवनीयस्य दक्षिणाग्नेश्च गमनादग्निद्वयाभावेन मध्ये सञ्चाराभ्यनुज्ञानेन प्रातरुद्धरेदिति प्रतिकर्मोद्धरणविधानाच्च धार्येगतश्रिय आहवनीय इत्यनेन गतश्रीकत्रितयस्यैवाजस्रमाहवनीयधारणविधानात्तदितरस्य नाहवनीयधारणम् ॥

## सू० प्रत्यर्थम् ॥ ६ ॥

संस्कारस्यापि कर्मापवर्गेऽपवर्गादर्थप्रयुक्तत्वाच्च संमार्जनवत्प्रतिकर्मकर्तव्यमाधानमिति प्राप्ते सकृदाहितस्य गार्हपत्यस्य जागरणमरणिर्वा यथा धारणोपायस्तथाऽजस्रपक्षे आहवनीयस्यापि । तेन न पुनः पुनराधानं । दक्षिणाग्नेस्तु पूर्वं गार्हपत्यादेवोद्धृतत्वात्ततः प्रतिकर्म प्रत्युद्धारणमेव तदाधानम् । अगतश्रियां तु कर्मप्रादुष्करणमेवाहवनीयाधानम् ॥

## सू० पूर्वं गार्हपत्यात् ॥ ७ ॥

प्रतिकर्मप्रादुष्करणमप्यग्न्योररणित एव न गार्हपत्यात् । कर्मापवर्गे तयोः स्वोपादानकारणमरणिम्प्रत्येवागतत्वात् । एकोपादानकार्याणां

घटशरावादीनामिव परस्परं विलयाधारत्वायोगात् । तस्मादरणित एव प्रतिकर्ममन्यन्मिति प्राप्ते काष्ठस्याग्न्युपादानत्वायोगेन तत्र गमनासम्भवाच्छास्त्रैकसमधिगम्ये तु गमने गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरतीत्यग्निहोत्रप्रकरणस्थवचनेन गार्हपत्यएवेतराग्निलयध्वननात्तत एव प्रतिकर्मोद्धरणम् ॥

## सू० अहोमार्थेषु ॥ ८ ॥

आहवनीये जुहोतीत्यादिविधिषु गार्हपत्याग्नावप्रक्षेपसिध्यर्थं तत आहवनीयस्यायतनभेदेन पृथक्करणस्यावश्यकत्वेप्या हवनीयमुपतिष्ठत इत्यादि विहितोपस्थापनादिकार्याणां गार्हपत्यान्तर्निलीनाहवनीयस्यापि तत्वानपायादनुद्धृतेऽपि सम्भव इति प्राप्ते आहवनीयादिशब्दानां तत्तदायतनस्थितसंस्कृताग्निवाचित्वेन होम इव तदितरकार्येष्वपि तादृशस्यैवावश्यकत्वात्तत उद्धृत्यैवोपस्थानम् ॥

## सू० अपवृत्ते ॥ ९ ॥

कर्मापवर्गोत्तरमप्यग्नेदर्शनात्तस्य च गार्हपत्यादुद्धृतत्वेन सैव साग्नेः सन्ततिरिति न्यायेन वैदिकत्वानपायात्संस्कारलक्षणानां गुणानाम् गुणिनाशमन्तरेणानपायात्तज्जागरणस्याभावे कतिपयघटिकोत्तरं तन्नाशे सति स तर्हि गत इति श्रुतेरुद्धरणश्रुतेश्चोपपत्तेर्यावन्नाशमपवृत्तेऽपि कर्मणि दीक्षणीयापवर्ग इव विद्यमानं ज्योतिर्वैदिकमेवेति प्राप्तेऽरणिसमारोपणोत्तरं परिदृश्यमानस्यापि ज्वलनस्येव कर्मापवर्गेपि तथात्वोपपत्तेः संस्काराणां कार्यार्थत्वेन यावत्कार्यमेव तदवस्थानस्य शास्त्रादवगमात्स तर्हि गत इत्यनेन होमाव्यवहितोत्तरमेव गमनश्रुतेः, परिदृश्यमानोप्यायतनस्थोपि ज्वलनः । संस्कारापायादपवृत्ते कर्मणि लौकिकः सम्पद्यते । अत एव यस्योद्धृतोग्निरहुतेऽग्निहोत्र उद्वायेदित्यादिना तान्येवावक्षाणानि सन्निधाय मन्थेदित्यन्तेनाग्निहोत्रहोमापवर्गात्प्रागग्न्युद्वान एव पुनर्मथनमुक्तं तेन तदपवर्गे तदभावाल्लौकिकत्वं ध्वनितम् ॥

## सू० एतेन सोमे ॥ १० ॥

सोमे दीक्षणीयापवर्गोत्तरं विद्यमानोप्याहवनीयादिरुक्तन्यायेन लौकिक एवेति प्राप्ते देवता एवोभयतः परिगृह्य यजमानोवरुन्ध इति वचनेन सोमयागीयसकलदेवतापरिग्रहरूपसंस्कारस्याग्निनिवृत्तत्वात्तदपगमे तदपगमापत्तेर्दीक्षणीयाग्निरेवान्तं धार्येत। वस्तुतो दीक्षायाः सौमिकत्वेन तत्प्रणयनस्यापि तदर्थत्वात्सोमापवर्ग एव लौकिकता न दीक्षणीयासमाप्तौ। अत एव न वेदे पत्नीं वाचयति नैनं स्तृणात्यसंस्थित इव वा अत्र यज्ञोयत्सौम्योऽध्वर इति श्रुतिः सोमापवर्गाभावध्वननद्वाराऽग्नेर्लौकिकत्वमेव ध्वनयति। अकर्मकालेप्यपरेणाहवनीयं व्रतमत्याहृत्य प्रयच्छतीत्याहवनीयदर्शनञ्चोपपद्यते। प्रापणीयादौ प्रसङ्गसिद्धेर्न पुनः प्रणयनम्॥

## सू० तदुत्तरवेद्याम् ॥ ११ ॥

सोमे समाम्नातं प्राञ्चमग्निप्रणयन्तीति प्रणयनमविशेषात्सर्वस्याहवनीयस्य औत्तरवेदिकस्यैवेत आरभ्याहवनीयत्वेन तस्यैव सर्वहोमाधिकरणत्वादिति प्राप्ते एतमाहवनीयमाहवनीयात्प्रणयतीति श्रुतावाहवनीयस्यापादानत्वश्रवणात्तस्यचान्यापाये ध्रुवत्वेनास्त्येवाग्निशेषः। अत एव पूर्वोयत्सन्नपरो भवासीति मन्त्रलिङ्गं पूर्वमग्निमभ्युदेतीत्यादौ पूर्वापरशब्देन शालामुखीयाहवनीययोर्व्यवहारश्च सङ्गच्छन्ते॥

## सू० आहवनीयविभागः ॥ १२ ॥

शालामुखीयोप्याहवनीय एव। आहवनीयादित्यपादानस्य व्यवहारात्। वरुणप्रघासेष्विव वेदिभेदेन विभागमात्रमिति प्राप्ते आहवनीयापादानकोत्तरवेद्यधिकरणकप्रणयनेनाहवनीयं कुर्यादिति विधौ प्रणयनाव्यवहितपूर्वक्षणेऽपादानस्याहवनीयत्वानपायेन तथा व्यवहारसम्भवेपि तज्जनकत्वेन तदुत्तरक्षणमारभ्य तस्य गार्हपत्यत्वमेव। अत एव संमार्ष्टि गार्हपत्याविति प्राजहितशालामुखीययोर्गार्हपत्यत्वेनैव व्यपदेशः श्रुत्यन्तर उपपन्नः। एषोत ऊर्ध्वं गार्हपत्यो भवतीति स्मृतिश्च यत्तु भाष्ये वर्णकान्तरं तदस्यैवाधिकरणस्य पुनरपि वाक्यान्तरेण वर्णनं सिद्धान्तसूत्रे पाठभेदप्रदर्शनैकफलकम् ॥

## सू० सर्वेषाम् ॥ १३ ॥

यानि च गार्हपत्यकार्याणि द्वाभ्यां गार्हपत्ये जुहोतीत्यादि सौमिकाङ्गानि यानि चैष्टिकानि पत्नीसंयाजादीनि तानि सर्वाण्यपि विकल्पेनोभयत्र क्रियेरन्नविशेषादिति प्राप्ते प्राञ्चमग्निं प्रणयन्तीत्यादिना तर्हि तस्य पशुश्रपणं हरेत्तेनैवैनं भागिनं करोतीत्यन्तेन प्राजहितस्य पशुश्रपणैककार्यकत्वश्रवणात्तदितराणि शालामुखीय एव भवन्ति ॥

## सू० आहवनीयात् ॥ १४ ॥

आग्नीध्रीयाग्नेरपि यज्ञतन्वादिहोमाधिकरणत्वेनाहवनीयत्वावश्यम्भावादौत्तरवेदिकादेव तस्य प्रणयनमिति प्राप्ते शालामुखीयादेव प्रणयनम् । अग्निप्रथमाः प्राञ्चोऽभिप्रव्रजन्ति सोमप्रथमा वेति श्रुतौ प्राञ्च इति प्रागाभिमुख्येन गमनविधानादग्नीषोमाभ्याम्प्रणीयमानाभ्यामनुब्रूहीत्यत्र द्वन्द्वावगतस्याग्निप्रणयनसोमराजप्रणयनयोः साहित्यस्य चानुरोधेन शालामुखीयसमीपवर्त्तिसोमलताया इव तदन्तर्वर्त्तिन एवाग्नेः प्रणयनं गार्हपत्यापादानकत्वादेवाग्नीध्रीयस्याप्याहवनीयैकदेशत्वमेवेति न तस्य होमाधिकरणत्वभङ्गः । औत्तरवेदिकाग्निप्रणयनोत्तरमप्याग्नीध्रीयप्रणयनपर्यन्तमाहवनीयांशस्येह सत्त्वादेवाहवनीयादित्यपादानत्वेनोक्तिः । एषोऽत ऊर्ध्वमिति स्मृतिरप्याग्नीध्रीयप्रणयनोत्तरकालपरेति तु भाष्यम् ॥

## सू० आहवनीयाद्धिष्ण्यान् ॥ १५ ॥

अङ्गारैर्द्वे सवने विहरन्तीत्यादिना विहितन्धिष्ण्यानां विहरणमौत्तरवेदिकादेव स्यात् । तदग्नीनामपि होमार्थत्वादिति प्राप्ते आग्नीध्राद्धिष्ण्यान्विहरतीति नियमनादाग्नीध्रीयस्याप्याहवनीयैकदेशत्वेन होमसंयोगोपपत्तेस्तत एव विहरणम् ॥

## सू० अनुसवनम् ॥ १६ ॥

धिष्ण्यानां सवनभेदेन त्रीणि विहरणानि । तान्युद्दिश्याङ्गारैर्द्वे सवने विहरन्ति शलाकाभिस्तृतीयमिति गुणविधयः चतुर्थस्य गुणविधेर-

भावान्नास्ति चतुर्थं विहरणमिति प्राप्तेऽग्निष्टोमसाममकृत्य धिष्ण्या ज्योतिष्मतीः कुर्यादिति विधेश्चतुर्थविहरणसिद्धिः । नचाग्नीन् ज्योतिष्मतः कुरुतेति प्रैषोत्तरमिव तृतीयसवने विहृतानामेवाग्नीनां भस्मापनयनेन समिन्धनरूपमेव ज्योतिष्मत्त्वमिति वाच्यं । धिष्ण्याग्नीनां महाग्नीनामिव जागरणाभावेन तदनुपपत्तेः । अत एवैतावतीर्वा अग्नेस्तनूरित्यादिना त्रिचत्वारिंशत्तनुसंख्याकथनं सङ्गच्छते । चतुर्थविहरणाभावे सप्तन्यूनतापत्तेः । तच्चेत्थम् । षड्धिष्ण्यानां मार्जालीयस्य च चतुर्वारं विहरणादष्टाविंशतिः । शामित्रा औपयजाश्च पशुभेदात् त्रयस्त्रयः । निर्मन्थ्याश्चत्वारः । आग्नीध्रीयेण सह महाग्नयः पञ्चेति ॥

## सू० तृतीयसवने ॥ १७ ॥

धिष्ण्यान् व्याघारयतीति विधाय तृतीय आज्येनेति विधिनोपसंहारात्तृतीयसवन एव व्याघारणमिति प्राप्ते सामान्यविधिनाऽनुसवनं व्याघारणं विहितं । तत्र तातीर्यमेव तृतीय इत्यनूद्याज्यलक्षणगुणमात्रविधिः । कालद्रव्योभयनियमे वाक्यभेदापत्तेः ॥

## सू० तस्मात्तेषु ॥ १८ ॥

तेषां येनेदिष्टं पर्यविशन्ते सोमपीथं प्राप्नुवन्नाहवनीय आग्नीध्रीयो होत्रीयो मार्जालीय इति प्रकृत्य तस्मात्तेषु जुहुतीति विधानात्तेषामेव सोमेन व्याघारणमन्येषां त्वाज्येनेति प्राप्तेऽतिहाय वषट्करोति विच्छेते सोमपीथेनार्ध्यन्ते इति निन्दार्थवादेन सोमनिषेधस्याप्युन्नयनादाज्येन सह विकल्पः । तृतीयसवने त्वाज्यविधिर्नियमार्थः ॥

## सू० तेषां वायव्यम् ॥ १९ ॥

शूर्पेण जुहोतीत्यत्र प्रकृतशूर्पस्येव धिष्ण्यानां व्याघारणेऽपि प्रकृतत्वाद्ग्रहचमसान्यतरस्मित्करणत्वेन प्राप्ते द्रोणकलशात्परिप्लवया राजानमादाय प्रत्यङ्ङासीनो धिष्ण्यान्व्याघारयतीति श्रुतावादानकरणत्वेनोपस्थितायाः परिप्लवाया एव व्याघारणेऽपि करणत्वम् । अन्यथा परिप्लवायामादानस्यादृष्टार्थत्वापत्तेः ॥

## सू० सोमे होमेषु ॥ २० ॥

वैसर्जनानि जुहोतीत्यादिभिर्विहितानां सौमिकानां दर्विहोमाणां द्रव्याकाङ्क्षत्वात्प्रकृतः सोम एव बह्वर्थत्वान्नियम्यत इति प्राप्ते सोमद्रव्यस्य कतिपयकार्येष्वाहत्यविधानेन तदितरेषु तदभावध्वननादाज्यस्यैव कोशादौ हविःपदेन निर्देशेन तस्यानादिष्टद्रव्ये प्रवृत्तेराज्यं हविरनादेश इति स्मृत्याऽनुमतेराज्येनैव ते होमा भवेयुः । अत एव धिष्ण्याव्याधारणसंपातेनाज्येन प्राशीव्रतं श्रीणातीत्यत्राज्यस्य सिद्धवत्कृत्यानुवाद उपपन्नः ॥

## सू० सवैव स्यात् ॥ २१ ॥

यस्यैव धिष्ण्ययो विह्रियते सोऽनुख्यायतीत्यादिना यजमानं वा एतद्विकर्षन्ते यदाहवनीयात्पशुश्रपणं हरन्ति सवैव स्याद्विर्मन्थ्यं वा कुर्याद्यजमानस्य सात्मत्त्वायेत्यन्तेन पशुश्रपणार्थोऽग्निर्नियम्यते । तत्र सवैव स्यादित्यनेनाहवनीय एवोच्यते । यजमानो वा आहवनीय इत्युपक्रान्तत्वेन तस्यैव बुद्धिस्थत्वादिति प्राप्ते प्राजहित एव तत्पदेनोच्यते निर्मन्थ्येन सह तुल्यकोटिकविकल्पोक्तिसामर्थ्यात् । सर्वत्र कोटिद्वये साधारणधर्मावश्यकत्वात् । प्राजहितस्यापि मथनजन्यत्वेन लौकिकनिर्मन्थ्यसाम्यात् । वैदिकनिर्मन्थ्य एव वा स्याल्लौकिकनिर्मन्थ्यो वेति तदर्थात् । आहवनीयहरणे यजमानस्यैव विकर्षणं स्यादिति विनिन्द्य यजमानस्यात्मलाभाय विधीयमानस्याग्नेराहवनीयातिरिक्तत्वावश्यम्भावाच्च । अन्येनान्यस्य सात्मत्वसम्भवात् । तस्मात्प्राजहितस्यैवायं वादः ।

## सू० पशौ शालामुखीयः ॥ २२ ॥

वरुणप्रघासेषु प्राजहितादेवोत्तरवेदेः प्रणयनवन्निरूढपशावपि सम्भवाच्च शालामुखीयो भवेदिति प्राप्ते प्रकृतौ शालामुखीये सौमिकस्य कस्यापि कार्यस्याभावात्पाशुककार्यार्थमेव तदुपादानेन पश्वङ्गत्वाच्चोदकलब्धः शालामुखीयो निरूढादिष्वपि स्यादेव ॥

## सू० पश्विष्टिषु ॥ २३ ॥

पशावुभयत इष्टिपत्नवदन्यतरत इष्टिपत्नोऽप्यस्ति । तत्र प्रथमत इष्ट्यभावे पशावेवाहवनीयप्रणयनं भवतीत्यविवादं । तदवैरूप्याय प्रथमेष्टिपत्नेऽपि तथैव स्यात् । इष्टौ प्रणीतस्येष्ट्यपवर्गे लौकिकत्वादिति प्राप्ते देवतापरिग्रहरूपसंस्कारस्य साङ्गपश्वपवर्ग एवापनयाद्गार्हपत्यवरणीयाहवनीयवदैष्टिक एवान्तं धार्यः ॥

## सू० पूर्वेद्युः ॥ २४ ॥

पशौ पूर्वेद्युरेव प्रणयनं कृत्वाचिन्ता तद्दिनीयं सायमग्निहोत्रमौत्तरवेदिक एव स्यात् । तस्यैव मुख्याहवनीयत्वादिति प्राप्ते मध्येचिन्ता ॥

## सू० अग्निहोत्रस्य ॥ २५ ॥

अग्निहोत्रद्रव्यस्य पाकः शालामुखीय एव स्यादिति प्राप्ते मुख्याहवनीयवन्मुख्यगार्हपत्यलाभेऽनुष्णाशीतवन्मध्यविधगार्हपत्यग्रहणे मानाभावात्स्वीयगार्हपत्यलाभे परकीयगार्हपत्यग्रहणस्यानुचितत्वाच्च प्राजहितएव श्रपणम् ॥

## सू० शामित्रे ॥ २६ ॥

पशोरिव पशुतन्त्रान्तःपातिनः पुरोडाशस्यापि प्रसङ्गित्वेन शामित्र एव श्रपणे प्राप्ते शालामुखीय एव स्यात् । तस्य गार्हपत्याहवनीयोभयरूपत्वात् । पुरोडाशे चोदकेनोभयोर्विकल्पेन प्रापणेऽपि सम्भवत्यविरोधेन विधिद्वयानुग्रहेऽन्यतरत्यागस्यानुचितत्वात् ॥

## सू० द्व्यहे ॥ २७ ॥

निरूढपश्वादिपूत्तरवेदेः कालोद्ग्रहरूपस्त्र्यहरूपो वा स्याच्चोदकानुग्रहादिति प्राप्ते स्नात्वोप्त्वा केशश्मश्रुणी अरणी समारोप्य निर्मथ्योदवसायेत्यादिना सद्यस्कालत्वस्य वाचनिकत्वादतिदेशबाधः । अत एवोत्तरवेद्यां नाग्निहोत्रस्य करणप्रसक्तिः । दैवात्कर्मण उत्कर्षे तु सत्यां प्रसक्तौ तत्रैव करणमिति कल्पः ॥

## सू० पशुवरुणः ॥ २८ ॥

पशौ वरुणप्रघासेषु च प्रकृतितः प्राप्तत्वाच्छालामुखीयो न स्यादिति प्राप्ते वैशेषिकविधिबलादस्त्येव । अत एव वरुणप्रघासेष्वापस्तम्बमते शालामुखीयो नास्ति बोधायनमते त्वस्तीति व्यवस्था ॥

## सू० संस्थिते ॥ २९ ॥

शालामुखीयादीनामग्नीनां धारणावश्यम्भावादनुगतेषु प्रायश्चित्तस्य यदाहवनीय उद्वायेदाग्नीध्रादुद्धरेदित्यादिनाऽऽम्नानाच्च सोमयागापवर्गे ते सर्वेऽपि समारोपणीया इति प्राप्ते प्राजहितस्यैव समारोपः । तद्धारणस्यैव सर्वाग्न्यर्थत्वात् । इतरधारणस्य सोममात्रार्थत्वात् । प्रायश्चित्तस्यापि क्रत्वर्थत्वात् । अतोऽन्येषां कर्मापवर्गे लौकिकत्वान्न समारोपः ॥

## सू० गतश्रियः ॥ ३० ॥

अजस्रपक्षेऽप्यनेनैव न्यायेन शालामुखीयस्य समारोपणाभावे प्राप्ते सर्वकर्मार्थतया तद्धारणस्यापि गतश्रियो नित्यत्वात्तस्यापि समारोपः । यच्छाखायामाहवनीयस्य नित्यं धारणमाम्नातं तच्छाखीयानामप्ययमेव न्यायः ॥

## सू० दीक्षिताग्नेः ॥ ३१ ॥

दीक्षानिर्मोकात्पूर्वं प्रयाणप्रसक्तावग्नीनां पात्रान्तरे स्थापनेन सह नयनं स्यान्न समारोपः । प्रातरग्निहोत्रं हुत्वा समारोपयेदिति विधिना समारोपस्य सौत्रामण्यग्निन्यायेनाग्निहोत्राङ्गत्वात् । दीक्षितस्य चाग्निहोत्राभावेन तदयोगादिति प्राप्ते समारोपणस्याग्निनयनोपायत्वेनानन्तर्यमात्रेण वास्तोष्पतीयहोमस्येवाग्निहोत्राङ्गत्वे प्रमाणाभावाच्चाग्निहोत्राभावेऽपि समारोप्यैवाग्निर्नेयः ॥

## सू० प्रत्यग्निः ॥ ३२ ॥

अग्निभेदेनारणिभेद आवश्यकः । एकत्रारोपे संसर्गापत्तेः । सहारणिभिस्तरन्तीति नदीतरणविधावरणिबहुत्वश्रवणाच्च । अरणिभ्यां

सह तरन्तीति शाखान्तरात्तु द्वित्वबहुत्वयोर्विकल्प इति प्राप्ते रथाङ्गेन तरन्तीत्यादाविव नदीतरणेऽरणिसाहित्यमात्रविधानेन द्वित्वबहुत्वयोरुत्तराधरारणिभेदाभिप्रायेणानुवादमात्रम् । अजस्रपक्षाभिप्रायेण वा तदुपपत्तिः ॥

## सू० समारोप्य ॥ ३३ ॥

अग्नेः प्रत्यक्षनयनस्य समारोपविधिनैव परिसङ्ख्यातत्वादुख्याग्नेरपि समारोपे प्राप्ते उखासंयोगस्यैवोख्यपदप्रवृत्तिनिमित्तत्वेन समाख्याविरोधाच्छकटे पात्रस्थापनादिविधानाच्च न तत्समारोपः ॥

## सू० अपरयोस्तु ॥ ३४ ॥

समारोपणविधेरुपायान्तरादूषकत्वेन समर्थस्यैव साग्निचित्यकृताधिकारेणोख्यवद्गार्हपत्यादेरपि प्रत्यक्षनयनं स्यादिति प्राप्ते आयतनाद्वचनमन्तरेण बहिर्निर्गतस्य लौकिकत्वावश्यम्भावात्समारोपणस्य तु वाचनिकत्वात्समाख्याविरोधाभावाच्च समारोप्यैव नयनम् ॥

## सू० आत्मसमारोपणे ॥ ३५ ॥

आत्मसमारोपेण विधेरात्मनोऽग्नेर्वा संस्कारमात्ररूपत्वेनात्मन्यरण्योश्च समारोपो समुच्चीयेतामिति प्राप्तेऽग्नेर्नयनोपाययोरेकार्थत्वेन समुच्चयायोगाद्विकल्पः । आत्मसमारोपस्य संस्कारकर्मत्वे मानाभावात् ॥

## सू० आत्मसमारूढे ॥ ३६ ॥

प्रत्यवरोहणं त्वात्मसमारूढस्य लौकिकेऽग्नाविव यस्याहिताग्नेरग्निर्मथ्यमानो न जायते यत्रान्यन्दीप्यमानं परापश्येत्तत आहृत्य होतव्यमिति विधिना लौकिकेऽग्नावपि होमविधानात् पूर्वं लौकिकस्यापि मन्त्रेण प्रत्यवरोहणोत्तरं तस्यैव संस्कृतत्वेन वैदिकत्वसम्भवात् । यस्याहिताग्नेरग्निर्मथ्यमान इत्यविशेषेण मथनश्रवणेऽपि तस्यारणिसमारोपपक्षाभिप्रायेण व्यवस्थापयितुं युक्तत्वात् । उपवेषेणाङ्गारमपोहतीत्यविशेषेण श्रवणेऽपि साक्षाप्यपक्ष एवोपवेषस्य व्यवस्थादर्शनात् । आत्मन्यारोपितस्या-

रण्योरूपावरोहणेन मन्थने आत्मारोपस्यैव वैयर्थ्यापपत्तेः, गुरुलघुपक्षयोर्विकल्पायोगादिति प्राप्ते आत्मारोपपक्षेऽप्यरण्योरेवोपावरोहणम् । अरणिमथनस्य प्रत्यवरोहण साधनत्वेन नित्यवच्छ्रुतस्य पाक्षिकत्वकल्पनायोगात् । उपवेषस्य शाखाऽनुनिष्पन्नत्वेन तस्य सान्नाय्याभावे सम्भवादेव व्यवस्थितत्वेऽपि प्रकृते तदयोगात् । प्रत्युत लौकिकाग्नावरण्योर्वोपावरोहणस्यानियमप्राप्तौ मन्थनविधिबलादेवाधारनियमस्य कल्पयितुं युक्तत्वात् । प्रत्यवरोहणस्य संस्काररूपत्वाभावेन लौकिकाग्नेस्तावतैव वैदिकत्वायोगात् । यत्रान्यन्दीप्यमानमिति तु होमकालातिक्रमसम्भावनायां वचनेन तावन्मात्रस्य होमस्य तत्र विधानमित्यदोषः । गुरुलघ्वोरप्येकविंशतिसर्ववेदसयोरिव विकल्पो युक्त एव । तस्मादात्मसमारोपपक्षेऽप्यरण्योरेव प्रत्यवरोह्य मथनं, या तु स्मृतिर्लौकिकेऽग्नौ प्रत्यवरोहणपरा सूत्रान्तरकाराणां सा सुकरत्वरूपहेतुमूलिकैवेति ॥

इति संकर्षे भाट्टदीपिकायां पञ्चदशाध्यायस्य द्वितीयः पादः ॥ २ ॥

अयमग्निपादइत्युच्यते ।

---

## अथ पञ्चदशाध्याये तृतीयः पादः ॥

### सू० अतिग्राह्याः ॥ १ ॥

आग्नेय ऐन्द्रः सौर्यश्चेति त्रयोऽतिग्राह्याख्याग्रहास्तेषां सामानविध्यम्पूर्वमुक्तमिति स्मारितं धर्मिज्ञानार्थम् ॥

### सू० विश्वजिति ॥ २ ॥

तानेव प्रकृत्य विश्वजिति सर्वपृष्ठे ग्रहीतव्या अप्यग्निष्टोम इति अतोऽग्निष्टोमशब्दः प्रकरणादग्निष्टोमसंस्थविश्वजिद्यागपर इति प्राप्ते अप्यग्निष्टोम इत्यपि-शब्दाद् द्वितीयवाक्यत्वेन निश्चितेऽपि विश्वजित्पदानुवृत्तौ विशिष्टोद्देशापत्तेर्वाक्येन प्रकरणबाधादग्निष्टोमसंस्थत्वेन यागस्योद्देश्यत्वात्प्रकृतौ वेति न्यायेन प्रकृत्यग्निष्टोम एवैष विधिः ॥

## सू० सप्रकृतिगः ॥ ३ ॥

यत्पृष्ठेन गृह्णीयात्प्राञ्चं यज्ञं पृष्ठानि संस्तुणीयुर्यदुक्थ्ये गृह्णीयात्प्रत्यञ्चं यज्ञमतिग्राह्याः संस्तुणीयुरिति निन्दार्थवादगम्यउक्थ्यसंस्थक्रतावतिग्राह्यनिषेध उक्तन्यायेन प्रकृतिगाम्येवेति प्राप्ते यत्पृष्ठ इत्युपक्रमेणाक्थ्ये पार्ष्ठिकत्वरूपविशेषणलाभात्पार्ष्ठिकोक्थ्य एवायं निषेधः । न च विशिष्टोद्देशः अनुमितवाक्ये तस्यादोषत्वात् । समासपदस्यैवानुमेयत्वात् ॥

## सू० विकल्पो वा ॥ ४ ॥

प्रकृतितः प्राप्तानां प्रतिषेधे पाशुकाज्यभागन्यायेन विकल्पापत्तेः पर्युदासपक्ष एवाश्रयणीयः । अनुमितवाक्ये लक्षणाया अप्यभावादिति प्राप्ते पृष्ठ्यषडहप्रकरण एव वैराजस्य स्तोत्रायाग्नेयो गृह्यते शाक्वराणामैन्द्रो रैवतानां सौर्य इति विधाय पृष्ठानि वा एतानि पृष्ठा च्यावयन्ति यत्रैव पृष्ठानि युज्येरँस्तेषु तेऽतिग्राह्या इति पुनर्विधिदर्शनेन ग्रहणाग्रहणवद्विकल्प एव । पार्ष्ठिकोक्थ्येतरक्रतूनामनुपस्थितत्वेन पर्युदासस्यायुक्तत्वात् ॥

## सू० द्व्याश्रयवत् ॥ ५ ॥

यद्यप्यैच्छिकस्य तुल्यवद्विकल्पस्याष्टदोषदुष्टत्वाद्व्यवस्थितविकल्प एव युक्तः । नाना पृष्ठे षडहेऽतिग्राह्या भवेयुः बृहद्रथन्तरपृष्ठेतुनेति । वैराजस्तोत्रादिकाल एव तेषां विधानात् । तथापि पृष्ठसामान्ये प्राप्तानां ग्रहाणामङ्गभूतवैराजादिस्तोत्रानुसारेण सङ्कोचायोगात्सर्वत्रैच्छिको विकल्पः । न च ग्रहाणां पृष्ठाप्रच्युतिहेतुत्वकथनस्याङ्गत्व एव पर्यवसानात्प्रधानपृष्ठानुसारेणाङ्गभूताग्रहा नियन्तुं युक्ता इति वाच्यं । यदा स्तोत्राण्युपयन्ति तदा ग्रहा इत्येवं समानकालिकत्वमात्रबोधनफलकत्वेनापि तदप्रच्युतिहेतुत्वोक्तिसम्भवात् । अतस्तुल्यवद्विकल्प इति प्राप्ते तान्वै पूर्वस्मिँस्त्र्यहे गृह्णीयादुत्तरस्मिँस्त्र्यहे ग्रहीतव्या इति वचनद्वयवशाद् व्यवस्थित एव विकल्पः । त्र्यहद्वयेऽपि प्रत्यहं त्रयाणां त्रयाणां ग्रहणे पृष्ठविधिनैव

तत्सिद्धावनयोर्वैयर्थ्यापत्त्यैव प्रत्यहमेकैक एव ग्रहो ग्राह्य इत्याकारकसमासविधायकत्वेनैव सार्थक्यस्य वक्तव्यत्वात् । उत्तरस्मिँस्त्र्यहे समासानुरोधेनैव वैराजादिकालनियमनात् । उपस्तम्भनं वा अतिग्राह्याश्चक्रे पृष्ठानीति पृष्ठबहुत्वसंयोगाच्च वैराजसामस्तोभैरतिग्राह्याणां सामन्वत्वेन स्तवनाच्च ॥

## सू० वैराजस्य ॥ ६ ॥

वैराजस्य स्तोत्रायाग्नेयो गृह्यत इति वचनेन वैराजस्तोत्राख्यदेवताकयागविधिः । आग्नेय इत्यस्योपांश्वादिवन्नामधेयत्वेन देवतातद्धितत्वायोगात् । चतुर्थ्या आनर्थक्यप्रतिहतत्वाच्चेति प्राप्ते मान्त्रवर्णिकदेवतालाभेन तत्प्रख्यन्यायेनैव नामत्वेन देवतानाङ्गत्वात्सम्बन्धसामान्यार्थे षष्ठीस्थाने चतुर्थी । न च तादर्थ्यचतुर्थ्या ग्रहाणां स्तोत्राङ्गत्वं विनियोगभङ्गेन वैपरीत्यं वा शङ्क्यं । ये वा अमी वैराजस्य स्तोमास्तैरेवैते सामन्वन्त इति श्रुत्या सस्तोत्रकग्रहान्तरसाम्यसम्पिपादयिषया गौणसामवत्त्वोपपादनस्वारस्यविरोधात् । प्रातःसवनेऽति ग्राह्या गृह्यन्त इतिवदवान्तरकालवादो वा सप्तमीकल्पनयेति द्रष्टव्यम् ॥

## सू० न वा सह ॥ ७ ॥

अतिग्राह्यानेव प्रकृत्य माहेन्द्रमनुहूयन्त इतिश्रुतावनुशब्दः सहत्ववचनः । गामनुवत्सश्चरतीति साहित्येऽपि प्रयोगदर्शनात् । तदव्यवहितोत्तरकालस्यानुयागावरुद्धत्वात् वाचनिकत्वादेवान्यदेवत्ययापि माहेन्द्रग्रहयाज्यायै ते हूयेरन्निति प्राप्तेऽग्ने तेजस्विन्नित्यादीनां मन्त्राणां होमकरणत्वेनाम्नानेन करणान्तरानाकाङ्क्षतया माहेन्द्रयागाव्यवहितोत्तरकालपर एवानुशब्दः, अनुयजतीति विधेरितरयागेषु लब्धावकाशत्वेन प्रकृतत्रानन्तर्यांशे बाधस्य युक्तत्वात् । तेन माहेन्द्रेणेष्ट्वातिग्राह्यान् हुत्वाऽनुवषट्कुर्यात् । यत्तु भाष्ये ऽतिग्राह्याणामपि ग्रहत्वाद्ग्रहसमानधर्मतावश्यकतया सवषट्कारमेवैषां प्रदानं न पुनर्दर्विहोमत्वमित्युक्तम् तद्दधिग्रहादिषु व्यभिचरितत्वादुत्तराधिकरणान्त एव प्राणाय त्वेत्यादिरूपस्य मन्त्रस्य होमे सूत्रकृतैव विनियोगकथनेन तद्विरोधाच्च चिन्त्यम् ॥

## सू० आदितो गृह्येत ॥ ८ ॥

दधिग्रहो नित्य इत्युक्तं स चोपांश्वादिभ्यः पूर्व एव ग्राह्यः। एतदपूर्वविधेस्तेभ्यः पूर्वं पाठात् ज्येष्ठो वा एष ग्रहाणामिति श्रुत्यापि सर्वग्रहप्राथम्योक्तेः। प्रथमोत्पन्नस्यैव ज्येष्ठत्वेन व्यवहारादिति प्राप्ते ब्राह्मणक्रमान्मन्त्रक्रमस्य बलवत्त्वादुपांश्वादिमन्त्रोत्तरमेव दधिग्रहमन्त्रपाठात्प्रशंसायामेव ज्यादेशविधानेन ज्येष्ठा वा एता ब्राह्मणाः पुराविदामक्रन्नित्यादाविव ज्येष्ठशब्दस्य प्राथम्यवाचकत्वाभावादुपांश्वादिभ्यः परत एव तदिज्या। अत एवाऽऽग्रामानयनकाले दधिग्रहेज्याप्रदर्शनार्थोऽर्थवादो यथा गावः सञ्जानानाः सङ्गच्छमानाः सङ्गम्यान्योन्यं घ्नन्तीत्यादिः सङ्गच्छते ॥

## सू० कामसंयोगः ॥ ९ ॥

दधिग्रहमेव प्रकृत्याम्नातम्। आज्यग्रहं गृह्णीयात्तेजस्कामस्य सोमग्रहं गृह्णीयाद्ब्रह्मवर्चसकामस्येति नित्यत्वेन दध्नः करणत्वेन प्राप्तौ तदपवादेन तद्यागमाश्रित्य फलाय गुणविधी एताविन्द्रियकामवाक्यवदिति प्राप्ते दध्नेन्द्रियकामस्येत्यत्र दध्नेति तृतीयया गुणस्यैव फलभावनाकरणत्वप्रतीतेर्गुणफलसम्बन्धविधानेऽप्याज्यसोमयोरिह ग्रहपदेन समस्तयोस्तत्रैव करणत्वेन धात्वर्थस्यैव फलभावनाकरणतया दधिग्रहविकृतिभूतयोः काम्यग्रहयोः कर्मान्तरयोरेवेमौ विधी ॥

## सू० नित्यकामः ॥ १० ॥

तत्राय एव दधिग्रहं गृह्णीयात्पशुकामस्येति पठिते विधावप्युक्तन्यायेन कर्मान्तरत्वे प्राप्ते लाघवात्फलोद्देशेन धात्वर्थविधिमात्रम् गुणपदन्त्वनुवादः विहितस्य पुनःफलाय विधानात्संयोगपृथक्त्वेनैन्द्रवायवाग्रतावन्नित्यकाम्यत्वम् ॥

## सू० सोमग्रहः ॥ ११ ॥

दधिग्रहविकारेऽपि सोमग्रहे सोमधर्मा भवेयुः। सोमङ्क्रीणातीत्यादिसोमविधिष्वपूर्वसाधनसोमोद्देशेन धर्मविधानात्। उद्देश्यतावच्छे-

दकस्य विधेयव्याप्यत्वनियमादिति प्राप्ते सोमेन यजेतेति विधिगम्यापूर्वे ऽधनत्त्वस्यैवोद्देश्यतावच्छेदकतया प्रकृतित एव धर्मप्राप्ते र्यागस्य कथंभावानाकाङ्क्षतया च न तत्र सोमधर्माः ॥

## सू० तत्रार्थप्राप्तः ॥ १२ ॥

उक्तन्यायेनैवाभिषवस्याप्यप्राप्तत्वात्सोमलतांशुभिरेव यागः कार्य इति प्राप्ते चतुःस्रक्तिना पात्रेण ग्रहणस्य प्रकृतितः प्राप्तत्वात्तस्य च प्रथमात्यन्यायेन द्रवद्रव्यसाधनत्वेन व्यवस्थितत्वात्पात्रवशादेव प्रकृतावपि सान्द्रेतरदध्न एव करणत्वेन नियमयितुं युक्तत्वेनार्थिकत्वाभावाच्चोदकतोऽपि द्रवद्रव्याधारत्वद्वारैव पात्रप्राप्तेरभिषवस्याक्षेपः ॥

## सू० कर्मसंयोगात् ॥ १३ ॥

तिस्रो वह्नस्य समिध इत्येतया सोमं करोतीति सोमग्रहसविधौ श्रूयते । इह करोतेरेव भावनार्थकतया तत्र सोमस्य भाव्यतया ऋचः करणत्वेन चान्वयोभासमानोऽपि न युक्तः । सिद्धद्रव्यस्य साधनानाकाङ्क्षत्वेनासाधितमिति न्यायेन यागक्रिययेव तेन स्वभाव्यकभावनान्तरानाक्षेपात् । अतो विनियोगभङ्गेन सोमकरणकभावनायामेव मन्त्रविधानाश्रयणात्प्राकृतमन्त्रवाधाय यागे मन्त्रविधिः । यत्तु भाष्यकारैरसत्कार्यवादनिरासेन संस्कारात्मनः सतः स्वरूपात्मना सत्कार्यवादं समर्थ्य सोमस्य स्वरूपतोऽपि सत्त्वेन तत्र मन्त्रस्य करणत्वेन विधानायोगात्सोमग्रहादयं मन्त्र उत्कृष्यतेत्युक्तं तत्सोमोत्पादने यागान्तरेऽपि विनियोगासम्भवेन सागरन्तरेदित्यादिविधेरिवाप्रामाण्यापादकत्वादुपेक्षितम् । अतः सक्तुन्यायेन तृतीयान्तत्वकल्पनाद्यागे विनियोगेनोत्कर्ष इति प्राप्ते उत्पाद्यविकार्यादिभेदेन भाव्यस्यानेकविधतया हिरण्यकार इत्यादिव्यवहारसमर्थनार्थमावश्यकतया पूर्वाधिकरणन्यायेनोत्पत्तिविधौ सोमपदस्य रसात्मकविकारपरत्वेन तदनुवादेन मन्त्रविध्युपपत्तेरभिषव एवायं मन्त्रः करणम् ॥

## सू० अंश्वदाभ्यविधी ॥ १४ ॥

औपानुवाक्यकाण्डे च प्रकरणेऽवभृथात्परतश्चांश्वदाभ्यविधिद्वयं पठ्यते । तन्मन्त्रौ तूपांश्वादिभ्यः पूर्वमाम्नातौ । तत्रानारभ्याधीते सर्वक्रतूनामुपस्थित्यविशेषेऽपि द्विरुक्त्वादिदोषपरिहारानुगुणनिवेशानुसन्धानसापेक्षात्तस्मात्प्राकरणिकवाक्यस्य प्रबलत्वेन तत्रैवांश्वदाभ्ययोरुत्पत्तिविधी । एतदनुवादेनौपानुवाक्यकाण्डे गुणविधयः । तेषां प्रधानविधिपारतन्त्र्येणैव प्रकृतिगामित्वसम्भवात् । तस्मादवभृथानन्तरमेव पाठक्रमात्तयोः प्रचार इति प्राप्ते भूयस्त्वेनोभयश्रुतीति न्यायेनौपानुवाक्य एव गुणविधिबाहुल्यात्प्रधानविधिरपि । तत्र च प्राकृताङ्गान्तरैः सह पाठक्रमाभावादितरग्रहप्रचारकाल एव तयोः प्रचारः । वस्तुतस्तु औपानुवाक्य एव विधिस्वीकारेऽपि तस्य प्रकृतावन्ते तु बादरायण इति न्यायेन क्लृप्तक्रमकग्रहाणां परत एव निवेशे प्राप्ते प्राकरणिकपुनःपाठवैयर्थ्यपरिहाराय तस्य क्रमार्थकत्वं स्वीकर्तुं युक्तमिति न पूर्वोत्तरपक्षयोः फलभेदः । यदि ब्राह्मणपाठात्प्रबलेन मन्त्रपाठेनोपांश्वन्तर्यामादिग्रहेभ्यः पूर्वमेव प्रचार इत्युच्यते तर्हि तत एव पूर्वपक्षेऽपि तत्रानुष्ठानं सिध्यति । वस्तुतो व्यवनीयापोद्धियहेण चरित्वांश्वदाभ्यौ चरतीति श्रौतक्रमेणैव सिद्धेः प्राप्तिसूत्रमेवैतत् । एवं पशुशीर्षोपधानेऽपि ॥

## सू० भ्रातृव्यवता ॥ १५ ॥

औपानुवाक्ये विहितयोरंश्वदाभ्ययोर्भाव्याकाङ्क्षायां न्यायानुसन्धानसापेक्षज्योतिष्टोमोपकारापेक्षया भ्रातृव्यवता दाभ्यो ग्राह्यो बुभूषतांशुरिति वचनेन वैरिमरणादेरेव फलस्य झटित्युपस्थितेः काम्यावेवैतौ ग्रहाविति प्राप्ते एष वै हविषा हविर्यजते यो दाभ्यं गृहीत्वा सोमाय यजते परा वा एतस्यायुः प्राण एति योऽंशुं गृह्णातीति वचनयोर्वैयर्थ्यापत्तेः संयोगपृथक्त्वेनोभयार्थत्वम् । अग्निहोत्रस्येवोत्पत्तिविधिफलविधिपरत्वेनोभयसार्थक्येऽपि प्राकरणिकाभ्यां विधिभ्यां क्रत्वर्थत्वमनपोद्यमेव ॥

## सू० नानार्थानाम् ॥ १६ ॥

रात्रिपर्यायेष्वनाम्नातसोमानि स्तुतशस्त्राणि सन्ति । तेषु सोमाकाङ्क्षायां ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादिति वचनाद्ग्रहो वा चमसो वा विकल्पेन प्राप्नोति । ग्रहाणां वचनान्तरैः प्राप्तत्वेन तदंशेऽस्य वचनस्यानुवादमात्रत्वेन चमसैकविधानपरत्वाच्चमस एव वेति प्राप्ते क्वचित्केवलग्रहाणां केवलचमसानां च क्वचित्समुच्चितानां च तत्तद्यागाभ्याससन्निहितवचनैरेव यथायथं प्राप्तत्वेन तेषु स्तोत्रशस्त्रोभयवत्सु स्तोत्रोपाकरणे विकल्पितकालमात्रविधानार्थं प्रवृत्तेऽस्मिन्वाक्ये स्तुतशस्त्रवतः सोमानाहेत्यत्रेव समासवचनमात्रम्, रात्रिपर्यायेषु तु ग्रहचमसानां समुच्चय एव । तत्समुच्चयवदभ्यासविकारत्वात् ॥

## सू० ग्रहाः पृश्निः ॥ १७ ॥

वेदे तत्र व्यवह्रियमाणाः प्राणग्रहाः पृश्निग्रहाश्च न व ग्रहाभवेयुः । प्राणलिङ्गकैर्मन्त्रैरुपधीयमानानामिष्टकानां पञ्च शारदीये उपादीयमानानां सप्तदशानामुक्षणां च पृश्निवर्णवत्वेन तथाव्यपदेशोपपत्तेरिति प्राप्ते ग्रहपदसामानाधिकरण्येन रूढ्या योगापहारात्तेऽपि ग्रहविशेषा एव ॥

## सू० प्राणभृत् ॥ १८ ॥

प्राणग्रहान् प्रकृत्य प्राणा वै प्राणग्रहा इत्यादिना स्तुत्वा तत्सन्निधौ त्वे क्रतुमपि वृञ्जन्ति विश्व इत्यादयो मन्त्राः पठिताः तेषां च परस्पराकाङ्क्षया सम्बन्धः । मन्त्राणां ग्रहेभ्योऽल्पत्वेऽप्यावृत्त्या पूर्त्तिसम्भवादिति प्राप्ते ज्येष्ठा वा एता ब्राह्मणाः पुराविदामकन्निति तदर्थवादेषु तन्मन्त्राणां महर्षिलिङ्गत्वेन संस्तवात्तादृशानां च चयनप्रकरणे वसिष्ठविश्वामित्रभरद्वाजादिपदघटितत्वात्प्राणभृन्मन्त्राणामेवोपलम्भात्तेषामेव ग्रहणेऽपि करणत्वम् । अत एव प्राणभृत उपधाय संयत उपदधातीति विधिशेषे प्राणानेवास्मिन् धित्वा संयद्भिः संयच्छतीति तेषामिष्टकानां प्राणग्रहाणां च प्राणत्वेन तुल्यः स्तव उपपद्यते। प्राणभृन्मन्त्राणां पञ्चाशत्सङ्ख्याकत्वेऽपि दश गृह्यन्त इत्यवयुत्यानुवाद एकपर्यायापेक्षो युज्यते ॥

## सू० पृश्निप्राणग्रहान् ॥ १९ ॥

द्वादशाहे पृश्निप्राणग्रहान् व्यतिषजतीति श्रुतं । तत्र पृश्निग्रहाणां प्राणग्रहाणां च प्रदानकाले सोमरसग्रहणकाले वा वायुरसीत्यादिपृश्निमन्त्रदशकस्यायं पुरोभुव इत्यादिप्राणदशकस्य परस्परसाङ्कर्येण प्रयोगइति प्राप्ते जुहोतेरश्रवणाद्देवतानां चाभावेन नैते यागाः । ग्रहशब्दप्रयोगस्तूभावाज्यग्रहान् जपत इत्यादाविव तन्मन्त्रेषु गौणः । व्यतिषङ्गोऽपि मानैर्व्यतिषजतीति वचनात्तदभिषवार्यमंशुग्रहणरूपे माने क्रयकाल इवेन्द्राय त्वेत्यादिभिः प्राकृतैः पञ्चभिर्मन्त्रैः सह वैकृतानां विंशतेः साङ्कर्यं न पुनः प्रदान एव साङ्कर्यमित्यत्र मानमस्ति । अत एव व्यतिषङ्गविशदीकरणं कल्पसूत्रेषु एकः प्राकृतप्रथममन्त्रोदश पृश्नयः प्रथमे माने द्वितीयः प्राकृत एको दश प्राणग्रहा इति द्वितीयम्, ततस्तृतीयपञ्चमयोः पृश्नय एव चतुर्थे प्राणा एवेत्याकारक एकः । अन्योऽपि प्रकारस्तत्रैव द्रष्टव्यः ॥

## सू० प्रायणीये च ॥ २० ॥

अनारभ्याधीतानां पृश्निप्राणग्रहाणामंश्वदाभ्यादीनामिव प्रकृतौ निवेशे प्राप्ते प्रायणीयोदयनीययोर्दशमेऽहनि च गृह्यन्त इति वचनान्मानैः पृश्निप्राणग्रहान् व्यतिषजतीति तत्प्रकरणे पाठाच्च द्वादशोपसत्वस्येव ग्रहाणामुत्कर्ष एवेति ॥

इति सङ्कर्षे भाट्टदीपिकायां पञ्चदशाध्यायस्य तृतीयः पादः ॥ ३ ॥

अयं ग्रहपाद इत्युच्यते ।

---

# अथ पञ्चदशाध्याये चतुर्थः पादः ।

---

## सू० आर्षेयम् ॥ १ ॥

दर्शपूर्णमासयोरार्षेयं वृणीत इति श्रुतं । तत्र चर्त्विजो वृणीत इति वरणसंस्कृतस्यर्त्विजो विशेषणमार्षेयपदमृषिपदस्य तदुक्तमृषिणा

बन्धने चर्षाविति श्रुतिस्मृत्योर्वेदो प्रयोगदर्शनादविच्छिन्नवेदार्थविज्ञानानुष्ठानशीलपूर्वपुरुषकत्व बोधयति । अथदेवा योऽनूचानः श्रोत्रिययस्तस्यापि वेद एष वै ब्राह्मणऋषीणामार्षेयोयच्छुश्रुवानेष वै पितृमान् पैतृमत्य आर्षेयो यच्छुश्रुवानिति व्यपदेशात्ताद्रृशत्वमृत्विग्विशेषणं वासिष्ठो ब्रह्मेत्यादिवदिति प्राप्ते यजमानस्याशीर्गच्छेदृषीणां हि देवाः पुरुषमनुबध्यन्ते इत्यादिना यजमानपूर्वपुरुषपरत्वेन वाक्यशेषे स्तवनाद्यो वा अन्यस्यान्यस्यप्रवरेणेत्यादिना यजमानेतरप्रवरानुकीर्त्तने निन्दाश्रवणाच्च कौषीतकिब्राह्मणेऽथ यद्यजमानस्यार्षेयमाहनता अनार्षेयस्य देवा हविरश्नन्तीति विधावेव यजमानसम्बन्धकीर्त्तनात्तदीयप्रवरर्षिनामकीर्त्तनपर एवायं विधिः ॥

## सू० भृगुवसिष्ठेति ॥ २ ॥

प्रवरर्षीणां नाममात्रस्य भृगुवसिष्ठेत्यादिरूपस्य कथनमात्रेण विधिचारितार्थ्ये प्राप्ते अग्ने महाँ असि ब्राह्मणभारतेत्यस्यान्ते आर्षेययोजनेन यजमानाहवनीययोः पितापुत्रभावसम्बन्धेनाग्नेः स्तवनं कुर्यादित्यर्थस्य शाखान्तरपर्यालोचनलब्धस्यानुगुण्यायापत्यप्रत्ययान्तसम्बुध्यन्तपदानि भार्गववासिष्ठेत्यादीनि प्रयोज्यानि ॥

## सू० त्रीन्वृणीते ॥ ३ ॥

मन्त्रकृतो वृणीत इत्येक एव विधिः । तत्र चानियमेन बहुत्वसंख्यानां त्र्यादीनां कपिञ्जलन्यायेन त्रयाणामेव वा वरणप्रसक्तौ न पञ्चातिप्रवृणीते न चतुरो वृणीत इत्याभ्यां चतुःषडादिसंख्यानां निरासात्पञ्चार्षेयवरणमेकमेव विधीयते । एकं द्वौ त्रीनित्यवयुत्यवादस्तु स्तुतिमात्रं, तेन सप्तार्षेयोऽपि पञ्चानामेव वरणं कुर्यात् । इतरेषां तु मनुवत्कल्प इति प्राप्तस्य पुनराक्षेपे प्राप्ते चतुर्वरणस्याप्यवयुत्यवादेनोपपत्तौ न चतुर इत्यत्र नञो वैयर्थ्यापत्तेर्न पञ्चातिप्रवृणीत इति वाक्येऽपि पञ्चार्षेयवरणविधेः स्पष्टस्याभावाच्च त्रीन्वृणीत इत्यस्यैव विधित्वावसायात्तेन मन्त्रकृत इत्यस्योपसंहारात् त्र्यार्षेयस्यैव वरणं, भाष्यकारस्तु अत्र्या-

र्षेयस्येति सूत्रे प्रकृतसूत्रे च त्रिपदं पञ्चानामप्युपलक्षणम् । परिमाणा-चिख्यासेति त्रिपञ्चसंख्योपलिलक्षयिषेत्यर्थकमिति व्याचख्यौ ॥

## सू० यथार्षे ॥ ४ ॥

त्रयाणामार्षेयाणामनियतानुपूर्वीकतयोच्चारणम् । कल्पसूत्रेषु गोत्र-भेदेन पठितानां मन्त्रकृन्नाम्नां स्मार्तत्वेन पाठक्रमविवक्षायां मानाभावा-द्विति प्राप्ते ऊर्ध्वानध्वर्युर्वेच्छब्दादित्यादिनाऽध्वर्युप्रवरेषु तद्धितविनिर्मु-क्तप्रातिपदिकानां वच्छब्दान्तानां प्रातिलोम्येन पाठविधानाद्धोतृप्रवरेषु नियतानुपूर्वीसिद्धिः ॥

## सू० मनुवत् ॥ ५ ॥

आवृश्च्यत एष ओषधिवनस्पतिभ्यो यः परान्वृणीत इति त्र्यार्षेय-वरणं विनिन्द्य मनुवदित्येव ब्रूयादिति श्रुतम् । अयं च मनुवत्कल्पो राज-न्यवैश्यपरः । तेषां ब्राह्मणार्षिसन्तानत्वाभावादिति प्राप्ते त्र्यार्षेयवरणप्र-तिषेधपूर्वकं मनुवत्कल्पविधानात्तस्य च प्रसक्तिपूर्वकत्वेन तस्याश्च ब्राह्म-णेष्विव पुरोहितस्यार्षेयेण वेदयेदिति वचनान्तरेण राजन्यवैश्ययोश्च सत्वा-त्त्रैवर्णिकानामार्षेयमनुवत्कल्पयोस्तुल्यवद्विकल्पः । वस्तुतस्तु निन्दार्थवा-दस्य विधिशेषत्वेन प्रतिषेधकल्पकत्वाक्षमतया कल्पने च वाक्यभेदापत्ते-र्मनुवत्कल्पस्य च त्र्यार्षेययोग्यातिरिक्तब्राह्मणेषु सावकाशत्वात्सौत्रो वि-कल्पशब्दो व्यवस्थितविकल्पपरः । पुरोहितस्येत्यादिकन्त्वस्यैव गुणसू-त्रम् । पञ्चावत्तातिरिक्तपरत्वेन चतुरवत्तस्येव ब्राह्मणातिरिक्तपरत्वेन मनु-वत्कल्पस्य व्यवस्थाया निरासार्थम् । राजन्यवैश्ययोः पार्थक्येन विधिद-र्शनाच्च तेषु मनुवत्पक्षस्य नियता प्रवृत्तिरित्येव व्याख्येयम् ॥

## सू० निषादः ॥ ६ ॥

निषादस्थपते रथकारस्य च सङ्करजातित्वेनार्षिसन्ततित्वाभावादा-र्षेयवरणमिति प्राप्ते साक्षादृष्यपत्यत्वस्य त्रैवर्णिकेष्वप्यभावात्परम्परया तत्सम्बन्धे चाविच्छिन्नपारम्परिकतत्तद्वंश्यस्मृतिव्यतिरिक्तप्रमाणाप्रसरात्त-स्याश्च तेष्वप्यविशिष्टत्वात्सर्वस्यैव जगत ऋषिवंश्यतायाः पुराणेषु कथ-

नाच्च स्यादेव तेषामप्यार्षेयवरणम् ॥

## सू० तथा ब्राह्मणानाम् ॥ ७ ॥

क्षत्रियादिवृत्तिमाश्रिता ब्राह्मणा राजोपेताः । ब्राह्मणेन पुत्रत्वेन क्रीता ब्राह्मणवृत्त्या जीवन्तः क्षत्रिया ब्राह्मणोपेताः । तेषां पुरोहितप्रवरस्वप्रवरयोर्विरोधे सति विकल्पे परेण पूर्वबाधे वा द्विगोत्रवदुभयमेलने वा प्राप्ते राजोपेतादीनां प्रच्युतस्वकर्मणामपि ब्राह्मणत्वादिजातेरनपायात्स्वस्वजातीयमेव वरणम् । मासेन शूद्रो भवति ब्राह्मणः क्षीरविक्रयादित्यादयस्तु प्रायश्चित्तविधिशेषभूता निन्दार्थवादा न जातिनाशपराः ॥

## सू० द्विगोत्रस्य ॥ ८ ॥

द्व्यामुष्यायणानां शैशिरादीनामुभयकीर्त्तने त्रित्वसङ्ख्याधिक्यापत्तेरन्यतरत्रितयकीर्त्तनेनैव त्रीन्वृणीत इति विध्यर्थानुष्ठानसिद्धिरिति प्राप्ते विकल्पस्य जघन्यतयैवैकतो द्वावन्यत एकमित्यादिवचनसिद्धव्यवस्थयैवार्षेयवरणम् । अत एवोभयतो द्वयोर्द्वयोर्ग्रहणे त्रिस्त्रिग्रहणे वा चतुःषडार्षेयप्राप्तौ तन्निषेधः सङ्गच्छते । अन्यथा चतुःषट्प्रवराणामभावादेव सिद्धेर्निषेधवैयर्थ्यापत्तिः ॥

## सू० वषट्कर्तॄणां वा ॥ ९ ॥

दैवे श्रुतं दैवं च मानुषं च होतारौ वृत्वा आवमाश्राव्य सौमिकानृत्विजो वृणीत इति । तदिदमृत्विग्वरणं कर्म मध्ये विहितमृत्विक्संस्कारकत्वादविशेषात्सर्वार्थं । सप्त वृणीत इति तु दश गृह्यन्त इतिवदवयुत्यवाद इति प्राप्ते यदवृता वषट्कुर्युर्भ्रातृव्यं यज्ञस्याशीर्गच्छेदथ यद्येते वृता वषट्कुर्वन्त्येकधैव यजमानं यज्ञस्याशीर्गच्छतीति वचनेनावृतानां वषट्कारनिन्दया वषट्कर्तॄणामेव वरणं नियम्यते । अत एव ऋत्विजो वृणीत इत्युक्त्वा छन्दांस्येव वृणीते यद्धोतारं वृणीते यदाग्नीध्रमतिच्छन्दसं तदित्यादिना वाचं तद्वृणीत इत्यन्तेन कतिपयानामेव गणनं सङ्गच्छते । वषट्कर्तृत्वेन प्रसक्तो नाच्छावाकं वृणीत इति निषेधोऽपि ॥

## सू० होतृमैत्रा ॥ १० ॥

दर्शपूर्णमासयोरग्निर्देवो होतेति मन्त्रस्य होतृवरणे समाम्नातस्य चोदकतः प्राप्तत्वाद्धोतृमैत्रावरुणयोर्वैदिक्या वाचाऽन्येषां लौकिक्या वरणमिति द्वयोर्वरणं पशुधर्म इतरत्सोमधर्म इति प्राप्ते सर्वेऽपि लौकिक्यैव व्रियेरन् । सप्त वृणीत इत्येकविधिविहित एकस्मिन्कर्मणि वैरूप्यायोगात् । कृष्णविषाणया कण्डूयत इत्येकविधिविधेयस्यापि सवनभेदेन वैरूप्यं तु दक्षिणादानोत्तरं तत्प्रासनविधिविरोधादङ्गीकृतम् ॥

## सू० प्रैषेण ॥ ११ ॥

येषां शाखायामृतुप्रैषादिभिर्वृणीत इत्याम्नातं तेषां यज्ञे तैरेव मन्त्रैर्वरणं । परं त्वृतुप्रैषेषु होता यक्षदित्यत्रास्य परित्यागेनेद्रं होत्रादित्यादय एव मन्त्रा भवन्ति प्रैषयागाधिकरणन्यायात् ॥

## सू० सप्त ॥ १२ ॥

तिस्रो जुहोतीत्यादाविव सप्त वृणीत इत्यत्र धात्वर्थ एव सङ्ख्यान्वयः ऋत्विजां बहुत्वेन सप्तपदस्य सङ्ख्येयपरत्वायोगात् । अग्निर्देवीनामित्यनेन यजमानस्यापि वरणोक्तेश्च । ततश्च वषट्कर्तृष्वेव वरणमिति नियमेन पूर्वोक्तवरणस्य कर्तृसंस्कारार्थत्वेऽप्येतद्वचनविहितवरणान्तराणामारादुपकारकाणां तदतिरिक्ता ऋत्विजः परिशेषात्कर्मकारकतयाऽन्वीयेरन्निति प्राप्ते पूर्वोक्तवरणे यजमानेतरेषामष्टानां मध्येऽध्वर्युप्रतिप्रस्थात्रोरेकेन मन्त्रेण द्विवचनान्तेन वरणाभिप्रायेण सप्तर्त्विजो वृणीत इत्यनुवादमात्रम् ॥

## सू० निरूढः ॥ १३ ॥

द्वितीयमस्याश्रावयति द्वौ ह्यत्र होतारौ होता च मैत्रावरुणश्चेति दैवेऽहन्येव श्रुतमुक्तन्यायेन द्वयोरेवेदं वरणान्तरं सोमधर्म इति प्राप्ते द्वावित्यनेन तृतीयहोत्रभावस्य हेतूकरणादत्रेति पदेन योग्यतया निरूढपशुबन्ध एवोच्यत इति तत्रास्योत्कर्षः ॥

## सू० ध्रुवेभूते ॥ १४ ॥

वरणस्य सोमार्थत्वादौपवसथ्येऽहन्यप्याम्नातं सुत्याकाल उत्कर्षणीयम् । अङ्गानां प्रधानकालत्वनियमात् । अभिषवादिषु तथा दर्शनाच्चेति प्राप्ते सदोहविधानादीनां सोमार्थानामपि दिनान्तर एव करणादभिषुत्य गृहीत्वा यागाम्नानेन तादृशक्रमादिविरोधेनाभिषवादेरुत्कर्षेऽपि न वरणस्योत्कर्षे किमपि विरुध्यते । तस्मात्पूर्वेद्युरेव वरणमिति ॥

इति सङ्कर्षे भाट्टदीपिकायां पञ्चदशाध्यायस्य चतुर्थः पादः
आर्षेयपादः, वरणपादोवा ॥ ४ ॥
पञ्चदशोऽध्यायश्च समाप्तः ॥ १५ ॥

---

## अथ षोडशाध्याये प्रथमः पादः ।

---

## सू० सामिधेनीः ॥ १ ॥

सामिधेनीरनुवक्ष्यन्नेता व्याहृतीः पुरस्ताद्दधातीत्यादिभिर्विहितानां दशहोतृव्याहृतिहिङ्कारसामिधेनीनां क्रमनियामकाभावादनियतक्रमेणोच्येरन् इति प्राप्ते हिङ्कृत्य सामिधेनीरन्वाहेति क्त्वा–प्रत्ययेनाव्यवहितपूर्वकालकथनात्सामिधेनीभ्यः पूर्वो हिङ्कारः । अनुवक्ष्यन् पुरस्तादित्याभ्यामव्यवधानांशस्याकथनाद्धिङ्कारात्पूर्वं व्याहृतयः । दशहोतुरपि तथैव श्रवणेऽपि मन्त्रपाठक्रमाद्व्याहृतिभ्योऽपि पूर्वं निवेशः सर्वत्राव्यवधानस्याशक्यतयाऽल्पव्यवधानेनोपपत्तौ स्थूलव्यवधानस्यायुक्ततया प्रैषक्रमः सिध्यति ॥

## सू० तारमन्द्रौ ॥ २ ॥

अन्तरानूच्यं स देवत्वायेति श्रुतावन्तरेत्यनेन दशहोतृव्याहृतिमध्यभागे सामिधेनीपाठविधानेन पाठक्रमादिबाधः । न चान्तराशब्दः स्वस्वरवाचकत्वेन कोशादिषु प्रसिद्धः । उच्चैर्वा क्रियत इत्या-

दिना स्वरस्य प्राप्तत्वेन तदनपेक्षणाच्चेति प्राप्ते यत्क्रौञ्चमन्वाहासुरं तद्यन्मन्द्रं मानुषं तद्यदन्तरा तत्सदेवमिति श्रुत्यन्तरापदस्य तारमन्द्रोभयमध्यमभूमिकात्वेन स्वरविशेषं निर्दिश्यान्तरानूच्यमिति विधाने तस्यैवोपस्थितिश्रुतेर्न तस्य क्रमविधायकत्वम् ॥

## सू० अन्तर्वेदि ॥ ३ ॥

सामिधेनीरेव प्रकृत्यान्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्य इति श्रुतं। तत्रार्धमन्तर्वेदीत्यादाविव न स्थानविशेषलक्षणा वाक्यद्वयेन सम्भवति। तादृशस्थानस्यैकत्वेन तत्रैकः पादोऽन्यत्रान्यः पाद इति कथनस्वारस्यविरोधापत्तेः। तस्माद्वेदेरन्तरुपविश्य प्रवोवाजा अभिद्यव इति पादो वक्तव्यः तद्बहिरुपविश्य हविष्मन्तो घृताच्येति। पुनस्तदन्तरुपविश्य देवान् जिगाति सुम्नयोमित्यादिरीत्या सामिधेनीरनुब्रूयादित्यनेनैकवाक्यतया सिध्यतीति प्राप्ते तिष्ठन्नन्वाहेति विधेः स्थानविशेषसाकाङ्क्षत्वेन तत्समर्पकतयैकवाक्यत्वे सम्भवति वाक्यभेदायोगात्तादृशस्थाने स्थितवतोऽर्धान्तदवयवभेदेन होतुः पादद्वयस्यावस्थानेनान्यः पाद इत्यस्यानुवादत्वसम्भवादन्यपादमाहेत्युच्चारणकर्मत्वेनानिर्देशात्पादशब्दस्य ऋक्पादपरत्वायोगाच्च स्थानविशेषलक्षणया तत्र होता स्थित्वाऽनुब्रूयादित्यर्थः ॥

## सू० पञ्चदश ॥ ४ ॥

सामिधेन्यऋच एकादश पठिताः। विहितास्तु पञ्चदश। तत्र चतसृणामग्निसमिन्धनलिङ्गानामागमेन सङ्ख्या पूरणीया। तस्याः पृथक्त्वनिवेशित्वस्वाभाव्यात्। न च प्रथमोत्तमयोर्ऋचोस्त्रिरभ्यासविधानेन तदभिप्रायेण पञ्चदशत्वानुवादो युज्यत इति वाच्यं। तथाऽप्यृचामेकादशत्वानपायेन तासां चतुःषष्ट्युत्तरद्विशताक्षरत्वेन तासां त्रीणि च शतानि षष्टिश्चाक्षराणि भवन्ति तावतीः सँव्वत्सरस्य रात्रय इति श्रुत्यन्तरविरोधापत्तेः। रात्रिदृष्टान्तेनानभ्यस्ताक्षरनिष्ठत्वेन सङ्ख्याप्रतीतेः। तस्मात्प्रणवत्यक्षरपूर्त्यर्थमनुष्टुप्त्रयं जगतीद्वयं गायत्रीचतुष्टयं वा नेयं। पञ्चदशेति त्वेकादशानामभ्यासविशिष्टानामनुवादकमित्युक्तमिति प्राप्तेऽक्षरशब्दस्य

व्यञ्जनोपसर्जनकस्वरपरत्वेन तेषां च स्वरा विंशतिरेकश्चेति शिक्षा-
परिगणितानामल्पत्वेन तदधिकसङ्ख्यायाः सर्वत्राभ्यासाभिप्रायेणैव कथ-
नावश्यम्भावात्सप्तदश पृष्ठानीत्यादौ तृचस्याभ्यासेनैव सप्तदशत्वस्य
षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनमित्यक्षरसम्पत्तेश्च निर्वोढव्यतया प्रकृते-
ऽपि प्रथमोत्तमयोरभ्यस्तयोर्मेलनेन पञ्चदशर्चत्वस्य षष्ट्यधिकत्रिशताक्ष-
रकत्वस्य चोपपत्तेर्नोन्यागमः । स्पष्टं च कौषीतकिवचनम् एकादशसा-
मिधेनीरन्वाहेति प्रकृत्य त्रिःप्रथमया त्रिरुत्तमया पञ्चदश सम्पद्यन्ते
पञ्चदश पूर्वपक्षापरपक्षयोरहानीत्यादि ॥

## सू० सन्ततमुत्तरम् ॥ ५ ॥

यं कामयेत सर्वमायुरियादिति प्रवोवाज इति तस्य त्रिरनवा-
नमनूच्य अग्न आयाहि वीतय इति सन्ततमुत्तरमर्धर्चमालभेत । यं कामयेत
सर्वमायुरियाद्दित्याजुहोतादुवस्य तेति तस्य त्रिरनवानमनूच्य सहोप-
क्रमेदिति च श्रुतम् । अत्र प्रवोवाजीयाया अग्न आयाहीत्यनेन सान्तत्य-
विधानात्सार्धायाऋचस्त्रिरभ्यासः । न चोक्ताक्षरसङ्ख्याविरोधः । काम्येन
नित्यबाधसम्भवात् । न च तृतीयानुवचन एवोत्तरार्धर्चसान्तत्यविधि-
रस्तु सङ्ख्याया अविरोधायेति वाच्यं । प्रवोवाजीयामुद्दिश्य सन्तान-
विधेः प्रतिप्रवोवाजीयं प्रवृत्तेरावश्यकत्वात् । न च त्रिरनवानमनूच्येति
त्रिः पाठोत्तरकालमेव सन्तानविधानेन चरमानुवचन एव तल्लाभ इति
वाच्यम् । त्रिः प्रथमां त्रिरुत्तमामिति विधिभ्यामेव त्रिरभ्यासलाभेन प्रकृ-
तविध्योरनुवचनमात्रोत्तरत्वविधानादिति प्राप्तेऽन्यतः प्राप्तत्रिरभ्यासो-
द्देशेन त्रिरनवानमित्यंशेन निरुच्छ्वासत्वविधिः । आवृत्तित्रयसमाप्ति-
पर्यन्तमेकेनैवोच्छ्वासेन ब्रूयान्न मध्ये निः[1]श्वसेदित्यर्थः । ऋङ्मात्रोद्देशेनान-
वानविधौ प्रत्यभ्यासमृचो मध्ये निश्वासाभावेऽप्यृक्समाप्तौ निश्वासा-
भावो न प्राप्नुयात् । तथा च त्रिरित्यस्य वैयर्थ्यापत्तिः । अभ्यासमात्रस्य
विध्यन्तरेण लाभात् । एवमग्न आयाहीत्यर्धर्चस्य पाठत एवोत्तरत्वला-
भेनान्यतरवैयर्थ्यापत्त्यैन्द्रवायवाग्रं प्रथममहरित्यत्र प्राथम्यस्येवोत्तरत्व-

१ न विश्वसेदविश्वस्तमितिवदिदं समर्थनीयम् ।

मात्रविवक्षितम् । अथहणं त्वहःपदवदनुवादः । तृतीयानुवचनोत्तरं तस्या एवोत्तरत्वात् । तथा च प्रथमद्वितीयानुवचनयोर्द्वितीयतृतीयानुवचनसम्बन्धिप्रवोवाजीयार्द्धर्चेनैव सान्तत्यसिद्धिः । वस्तुतः प्रथमोपस्थितत्वादग्नआयाहीत्येतदेव विवक्षितमिति तृतीयानुवचनएवोत्तरयर्चा सान्तत्यम् । तेन याजुषहैत्रविधायककल्पादिसामञ्जस्यम् उत्तरमित्येव त्वनुवादः । नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेतेत्युक्तेः । रेवतीवाक्य इव च भावनाविशिष्टभावनान्तरविधानाच्च वाक्यभेद इति भाष्यकारः । त्रिरभ्यासोद्देशेनानवानमात्रविधिरिति तु युक्तम् । इतरांशस्य विध्यन्तरेण लाभस्योत्तराधिकरण एव वक्तव्यत्वात् । तस्मात्त्रसाधर्चाभ्यास इति नाक्षरसङ्ख्याविरोधः ॥

## सू० सन्ततमन्वाह ॥ ६ ॥

ता एकश्रुतिसन्ततमनुब्रूयादिति वचनान्तरेणापि सान्तत्यं प्रथमोत्तमास्वेव विधीयते । त्रिः प्रथमामिति वाक्योत्तरमेवास्य पाठेन तच्छब्देन सन्निहितपरामर्शात् । नन्वनवानविधिनैव तासु सान्तत्यलाभात्पुनर्विधिर्न वाच्य इति चेत् न । अनवानसान्तत्ययोर्भेदात् । पूर्वोत्तरोच्चारणयोर्मध्ये मौनकृतकालव्यवधानाभावः सन्तानः । निःश्वासाभावोऽनवानमिति । ननु सन्ततमुत्तरमर्धर्चमारभेतेति विधिनैव सान्तत्यलाभादवाच्य इति चेन्न । तेन पूर्वोत्तरार्द्धद्वयसन्धौ सन्तानप्रापणेऽपि प्रत्यृचं पूर्वोत्तरार्धयोः सन्तानप्रापणस्यैतत्फलत्वेन फलभेदात् । ननु सन्ततमुत्तरमर्धर्चमारभेतेति विधावुत्तरपदेन तत्तदृगुत्तरार्धस्यापि प्रतीतेरविशेषात्तेनैव सान्तत्यप्राप्तेरयं विधिर्न वाच्य इति चेत् न तेनायुष्कामप्रयोगे प्राप्तावपि नित्यप्रयोगे लाभाय विध्यन्तरस्यावश्यकत्वात् । तथा च सूत्रम् । अवाच्यत्वाच्चेति चेत्स्यात्संयोगपृथक्त्वादिति । एवं त्रेधा संयोगे पृथक्त्वव्याख्यानसम्भवेऽपि यदेकैकामेव सन्तनुयादिति विध्यन्तरसत्त्वादिति भाष्यकृतो व्याख्यानं तदवाच्यत्वाच्चेत्याक्षेपनिरसनासमर्थत्वादुपेक्ष्यं । तस्मात्प्रथमोत्तमयोरेव सान्तत्यं एकैकामेवेति वचनान्तरमप्यस्यैवानुवाद

इति प्राप्ते तादृशवचनवैयर्थ्यापत्त्यैव सामिधेनीमात्रोद्देशेनर्चां सन्धिषु सान्तत्यविधिः । प्रथमोत्तमपदेन तासां विशेष्टुमशक्यत्वात् । ता एक-श्रुतीत्यत्र तु सन्ततमित्यनूद्यैकश्रुतिमात्रविधिः । अन्यथा वाक्यभेदात् । उत्तरमर्धर्चमारभेतेत्यत्र त्वारम्भपदसमवधानेनोत्तरपदमृगन्तरप्रथमार्धर्च-मात्रपरम् ॥

## सू० सामिधेनीसन्तानः ॥ ७ ॥

एकैकामृचं सन्तन्वन्तीति विधावृचः सन्तन्वन्तीत्यनुक्त्वैकैकामि-त्युक्तेरेकैकस्या ऋचो याववयवावर्धर्चौ तयोराम्नायपाठेन प्राप्तस्य मध्येऽ-वसानस्य निषेधः प्रतीयते । ऋङ्मात्रोद्देशेन विधाने त्वृच एकस्या ऋग-न्तरेण सन्तानः प्राप्नुयात् । सन्ततमेकं श्लोकं वक्तीत्यादावर्द्धयोः सन्तान-प्रतीतेः । तस्मात्प्रवर्ग्यर्चामिव न मध्येऽवसानम् । ऋगन्ते तु भवेदेव । अत एवायुष्कामस्याग्न आयाहीत्यस्या ऋचः पूर्वेण सन्तानविधिरुपपद्यत इति प्राप्ते एकैकामृचमित्यनेन सन्तानप्रतियोगिनः कीर्त्तनात्तदनुयोगिनोऽपेक्षा-यामुपस्थितत्वात्तदुत्तरासामृचामेकैकस्या उपस्थितेरेकैकां स्वस्वपरयोः संयोजयेदित्यर्थप्रतीतेर्नार्धर्चयोः परस्परं सन्तानविधिः । अत एव चर-माया ऋचस्तृतीयावृत्तावनुयोगिन्या ऋचोऽभावान्निगदेनैव सन्तानो वचनान्तरेण विहितो युज्यते । उत्तमायै तृतीये वचने प्रणवेन निगदमु-पसंदधात्यग्ने महाँ असीत्यादिना । ऋगुद्देशेन सन्तानविधाने त्ववसान-सामान्याभाव एव प्राप्येत । न चार्द्धर्चौ सन्दधातीति वचनादनुयोगि-प्राप्तिः । तस्यर्गुत्तरार्धगन्तरपूर्वार्धच परत्वात् । यदसंयुक्ताः स्युरित्यादिन-र्चामसंयोगं विनिन्द्यार्धर्चयोः सन्धानं विधाय संयुनक्त्येवैना इत्युपसंहा-रात् । एतेनान्तरर्चावव्यन्य पुनरर्धर्चे व्यन्यादिति यथासाम्नायं विरामानु-वादः सङ्गच्छते ॥

## सू० प्रकरणात् ॥ ८ ॥

राथन्तरीं प्रथमामन्वाह बार्हतीमुत्तमामिति सामिधेनीष्वेव प्रक्र-तौ श्रुतं । तद्वशाद् बृहद्रथन्तरयोर्योनी ऋचावागमयितव्ये त्रिःप्र-

थमामिति विधिभिःस्तुतयोरप्यभ्यासादि भवेत् । तेन प्रवोवाजीयाद्योर्विकल्प इति प्राप्ते प्रतिरथन्तरस्य रूपं करोतीति वचनेन प्रवोवाजीयाया एव रथन्तररूपत्वेन संस्तवान्नान्या ऋक् प्रथमा कार्या । उत्तमायास्तूत्तमत्वादेव बृहद्रूपत्वम् । परमत्वमेव निमित्तीकृत्य बृहत्सामत्वेन वेदे बहुशः स्तुतिदर्शनात् । यथैन्द्रवायवोऽग्रे गृह्यते रथन्तरस्यैषवर्णोध्रुवउत्तमो गृह्यते बृहत एष वर्ण इति । अयज्ञो वा एष योऽसामेत्यारभ्याग्नऽआयाहीति तृचं रथन्तरवामदेव्यबृहद्वर्णत्वेन संस्तुत्य यमेवैतत्सामन्वन्तं करोतीत्युपसंहाराच्च । अस्मिन्नेव तृचे प्रथमोत्तमयोः सा स्तुतिरित्यपि सुवचम् । अतोनोत्तमाऽप्यन्या ऋक् ॥

## सू० त्रिर्विगृह्णाति ॥ ९ ॥

राथन्तरीं प्रथमामित्यादिना ऋक्त्रयं स्तुत्वेदमाम्नायते । त्रिर्विगृह्णाति अन्तरिक्षेण वा इमे लोकाः सन्तता अन्तरिक्षं वा अङ्गिर इति । एकस्या ऋचस्त्रिर्विभागं कुर्यादित्यर्थः । सामिधेनीप्रकरणे चास्य विधेः पाठात्तासामेवोद्देश्यत्वात्प्रत्यृचं त्रिस्त्रिर्विभजेत् । न च तन्त्वासमिद्भिरङ्गिर इत्येतत्सन्निधौ पाठात्तस्या एव त्रिर्विग्रह इति वाच्यम् । सन्निधानात्सामिधेनीप्रकरणस्य बलवत्वादिति प्राप्ते तन्त्वेत्यृच एव त्रिर्विभागः । तस्याः पाठं विधाय मध्ये विग्रहं विधायान्तरिक्षं वा अङ्गिर इति पुनस्तस्या ऋचःपरामर्शेनावान्तरप्रकरणप्रतीतेस्तस्याश्च सामिधेन्यवान्तरप्रकरणाद्बलवत्त्वात् । यत्तु शाखान्तरीयं वचनं तन्त्वासमिद्भिरङ्गिर इत्येतां त्रिर्विगृह्णातीति तन्न्यायसिद्धानुवादकम् ॥

## सू० पदवादे वा ॥ १० ॥

समिद्वती घृतवती चानूच्येते इति श्रुतौ समिद्वतीति स्त्रीलिङ्गवशादृचोविशेष्यत्वावगमात्समिध्यमानवतीं समिद्वतीं चेत्यादाविव समित्पदप्रथमप्रतीका ऋक् तादृश्येव घृतवती चानेया । समिधाग्निं दुवस्यत घृतं मिमिक्षिर इत्यादिका । अनूच्येते इत्यृगद्वयाभिप्रायं द्विवचनमिति

प्राप्ते तन्त्वासमिद्भिरङ्गिरो घृतेन वर्धयामसीत्यस्या एवायं वादः समिद्घृतयोरग्निसमिन्धनानुगुण्यद्योतनार्थः। अनूच्येते इति द्विवचनं तु छान्दसं। तत्पदवैशिष्ट्यभेदेनैकस्या एव द्वित्वोपचार इति तु पदवाद इत्यस्यार्थः। भाष्यकारस्तु समिद्वती इति नपुंसकद्विवचनं पदविशेष्यत्वाभिप्रायं समित्पदघृतपदयोः छत्रिन्यायेनैकैकपदाभ्यां व्यपदेश इत्याह । समिद्वती घृतवती च पदे अनूच्येते इति शाखान्तरवाक्यं तु यतः पदे अनूच्येते ततः कारणादियमेव ऋक्समिद्वती घृतवती चेति सुयोजम् ॥

## सू० ऋचि प्रणवम् ॥ ११ ॥

तत्रैव ऋचि प्रणवं दधातीति विधानात्प्रत्यृचमन्ते प्रणवः प्रयोज्यः स च यद्यपि कुण्डे बदरन्यायेन ऋगक्षरासंमिश्रो वा दधनि सितान्यायेन तत्संमिश्रो वेति द्वेधाऽपि सम्भाव्यते तथाऽपि प्रकृतेरुपांशुयाजपुरोनुवाक्योत्तरमिव कुण्डबदरन्याय एव युक्तः। आम्नात ऋगक्षराणां मध्य एकस्यापि विकारायोगात्। यो वै सामिधेन्याः प्रणवः स गायत्र्या नवममक्षरमिति श्रुत्यन्तरेणाष्टमाक्षरोत्तरत्वप्रतीतेरिति प्राप्ते क्रमेणोच्चरणीययोर्द्वयोः शब्दयोः सम्बन्धस्याङ्गुलिद्वयसम्बन्धस्येव वृत्तिनियामकत्वाभावादृचीति सप्तमीबोधिताधाराधेयभावबाधापत्तेर्वाचनिकत्वेनाक्षरविकारस्यादोषत्वात्प्रणवष्टेरिति विधिसिद्धत्वाच्चाक्षरं विकुर्वन्नेव निविशते। उपांशुत्वोच्चैस्त्वधर्मभेदात्तु नोपांशुयाजीयाक्षरविकारः । क्रतुमध्येऽष्टमाक्षरस्यापार्थक्येऽपि ब्रह्मयज्ञादौ तस्याविकृतस्य पाठात्तदभिप्रायेण नवमाक्षरत्वोक्तिः कालभेदेन ध्रियमाणयोरपि द्वे वस्त्रयुगे धारयतीति मिलित्वोक्तिदर्शनात् ॥

## सू० अन्तेवा ॥ १२ ॥

निवेश्यमानः प्रणवः प्रथमोपस्थितत्वादाद्याक्षर एव निवेश्यः, अग्न आयाहि वीतय इत्यादिरीत्येति प्राप्ते ऋगक्षराणां क्रमविपर्यासे मानाभावेनागन्तुकत्वादन्त्याक्षरस्यैव विकारः। अग्ने दीद्यतं बृहदित्यादौ-

तु चरमव्यञ्जनसहितः स्वर एकाक्षरम् । अत एव वषट्कारकत्वेन प्रणवस्तुतिरुपपद्यते । ऋचमुक्त्वा प्रणौतीत्यादौ त्वाधाराधेयभावाभावान्नान्त्याक्षरविकारः ॥

## ओङ्कारः ॥ १ ॥

ऋचि प्रणवं दधातीति विधानात्प्रणव इत्यक्षरत्रयात्मक एव शब्दो निक्षेप्यः । विधौ श्रूयमाणशब्दनियमनस्य न्याय्यत्वात् । ऐरङ्कृत्वोद्गेयमित्यादौ तथा दर्शनादिति प्राप्ते ॐकारस्यैवान्ते निक्षेपः । इरापदार्थस्य भूम्यादेः शब्दानुपूर्वीघटकत्वबाधेनैवेति शब्दस्वरूपलक्षणायामपि प्रणवपदस्य शब्दविशेष एव शक्तत्वेन वाचकशब्दे लक्षणायां मानाभावात् । अग्न्यादिदेवतावाचकपर्यायाणामनियमप्रसक्तौ वैधशब्दनियमनस्य न्याय्यत्वेऽपि नियतलब्धशब्दबाधस्यान्याय्यत्वात् । न हि वेदशास्त्रपुराणानि पठेदित्युक्ते वेदादिशब्दान् पठेदित्यर्थः प्रतीयते । अत एव ॐमिति प्रणौतीति बह्वृचाः प्रणवपदस्यार्थप्रदर्शनीं श्रुतिमामनन्ति । तस्मादोङ्कार एव निधेय इति ॥

इति श्रीसङ्कर्षे भट्टदीपिकायां षोडशस्याध्यायस्य प्रथमः पादः ॥ १ ॥

हौत्रकाध्याये सामिधेनीपादः ॥

---

## अथ षोडशाध्याये द्वितीयः पादः ।

## सू० त्रींस्तृचान् ॥ १ ॥

सामिधेनीरेव प्रकृत्य त्रींस्तृचाननुब्रूयाद्राजन्यस्य त्रयो वा अन्ये राजन्यात्पुरुषा ब्राह्मणो वैश्यः शूद्रस्तानेवास्मा अनुकान्करोतीति श्रुतं । सन्ति हि गायत्रीत्रिष्टुब्जगत्यनुष्टुप् चेति चत्वारि छन्दांसि ब्राह्मणादिवर्णचतुष्टयसम्बन्धित्वेन तत्र तत्र स्तुतानि । तदत्र राजन्यातिरिक्तवर्णत्रयस्य स्ववशंवदतापादकत्वेन तृचत्रयसंस्तवबलात्तृचा अपि गायत्रजागता-

नुष्टुभाएव राजन्येनोपादेयाः। तुल्यन्यायेन वैश्यस्य गायत्रत्रैष्टुभानुष्टुभा-भवन्ति। ता वै गायत्र्यो भवन्तीति प्राकृतविधेर्नैमित्तिकेन विकारेण बाध इत्यालेखनो मन्यते। आश्मरथ्यस्तु अष्टावेतानि हवींषि भवन्त्य-ष्टात्तरा गायत्रीत्यादिवदर्थवादमात्रेण छन्दोविशेषपरत्वेन नियमनस्य प्राकृतबाधस्य चायुक्तत्वात् पुनर्विधेः प्रकृतिप्राप्तं तृचान्तरपरिसङ्ख्यार्थत्वेन सार्थक्याद्गायत्रा एव प्राकृतास्तृचा याह्याइत्याह। ते च तृचाः प्रथमोत्तमे त्रिस्त्रिरुक्ते इति द्वावग्नआयाहि वीतयइत्यृक्त्रयेण तृतीयइत्येवंरूपाः। प्रथमोत्तमे त्रिरुक्ते सहसामन्वता तृचेनेति वाक्यशेषात्। अग्न आयाहीत्यृक्-त्रयस्य रथन्तरवामदेव्यबृहत्सामत्वेन संस्रवात्सामन्वत्तृचपदेन परिग्रहः॥

## सू० सर्वाणि ॥ २ ॥

सामिधेनीष्वेव सर्वाणि छन्दांस्यनुब्रूयाद्बहुयाजिन इति श्रुतं। तत्र सप्ताधिकशतसङ्ख्यानि छन्दांसि सर्वपदेनोच्यन्ते। सङ्कोचे मानाभा-वात्। यदि गायत्र्यादिसप्तकमेव निरुपपदछन्दःपदेनोच्यते। तदधि-कानाक्षराणां त्वति छन्दःकृतिछन्दःपदादिनैव व्यवहारः। अत एवाथ-र्वणसर्वानुक्रमण्यां यत्र सर्वाणि छन्दांसीत्युच्यते तत्र गायत्र्यादि जगत्य-न्तानि सप्त छन्दांसि जानीयादिति सूत्रमित्यालोच्यते तदा तावन्त्येव-प्रयोज्यानीति प्राप्ते गायत्रीत्रिष्टुब्जगतीनामेव प्रकृतत्वात्सर्वत्वमिहा-धिकारिकम्। अतएव त्रैधातवीयायामप्येतत्त्रितयमेव सर्वाणि छन्दांस्ये-तस्यामिष्ट्यामनूच्यानीत्युक्त्वा त्रिष्टुभो वा एतद्वीर्यमित्यादिना त्रिष्वेवे-तरचतुष्टयरूपतासम्पादनार्था स्तुतिरुपपद्यते॥

## सू० अभीक्ष्णम् ॥ ३ ॥

बहुयाजिपदेन यागबाहुल्यप्रतीतेर्बहुयष्टैव याह्यः। सहस्रदक्षि-णयागकर्तर्यपि सहस्रद इति प्रयोगदर्शनाद्बहुदक्षिणपौण्डरीकादियाजी वा याह्य इति प्राप्ते ऐष्टिकपाशुककर्माण्यपेक्ष्य सोमस्येतिकर्तव्यताबाहुल्या-द्विश्वसृजामयनान्ताखिलविकृत्यनुगतत्वाच्च सोमयाज्येव बहुयाजी।

अत एव यो ब्राह्मणो बहुयाजी स्यात्तस्य कुम्भ्यां गृह्णीयादिति विधाय स हि गृहीतवसतीवरीक इति विवरणमुपपद्यते ॥

## सू० अनाम्नानात् ॥ ४ ॥

सामिधेन्युत्तरं पठ्यमानानां निविदामप्यग्निसमिन्धनार्थत्वात्सन्तानविधिः प्रवृत्त्या कार्यापत्त्या च तत्रापि प्रवर्त्तते । सामिधेनीनां स्वरूपे सन्तानस्यानर्थक्यादग्निसमिन्धनद्वारा दार्शिकापूर्वसाधनत्वस्योद्देश्यतावच्छेदकत्वाच्च । अत एव द्वयं वा इदं सर्वं छन्दस्कृतं चाछन्दस्कृतं च तेन सर्वेणाग्निं स्तावानीति श्रुत्या ऋचामनृचां चैकधर्मावच्छिन्नत्वं बोध्यते । तेन यवेषु प्रोक्षणमिव निवित्स्वपि सन्तानः स्यादिति प्राप्ते क्रमैकनियामिकायाः प्रवृत्तेरिहाप्रवृत्तेरेकप्रकरणे कार्यापत्त्यभावात्सामिधेनीभिरिष्ट्वा निविद्भिरुपस्तुत्येति कार्यभेदश्रवणात्स्तुत्यर्थत्वे वा शूरत्वचित्रत्वादिगुणभेदेन रथन्तरबृहतोरिव स्तुतिवैलक्षण्येन द्वारभेदात्तासां सप्तपदानि समस्यावस्येदथ चत्वार्यथ चत्वारीत्येवं प्रतिनियतनिर्देशेन धर्मभेदविधानाच्च न विदां सन्तानः ॥

## सू० वरणार्थं वा ॥ ५ ॥

आसीनमूर्ध्वजानु[1] होतारं वृणीत इत्यत्र विधीयमानमूर्ध्वजान्वासनमृत्विक्संस्कारद्वारा प्रकरणधर्मः । वरणस्यैव वायं धर्मः । होतृपदं च वहनसाधनत्वादृत्विक्परं । तेन सर्वेषां व्रियमाणानामूर्ध्वजान्वासनमिति प्राप्ते होतारं वृणीत इति वाक्यान्तरेणैकवाक्यतयोर्ध्वजान्वासनविशिष्टहोतृवरणविधानाच सर्वर्त्विग्वरणधर्मः ॥

## सू० अध्वर्युः ॥ ६ ॥

होतृप्रवराध्वर्युप्रवरयोः क्रमेण मन्त्रपाठः ब्राह्मणपाठस्तु शाखाभेदेन क्वचिद्विपरीतोऽपि दृश्यते । तथाऽप्यध्वर्युप्रवर एव पूर्वः स्यात् । मन्त्रलिङ्गोपोद्बलितब्राह्मणपाठस्य मन्त्रपाठाद् बलवत्त्वात् । ब्रह्मण्वदाचवत-

[1] "ऊर्ध्वज्ञुम्" इति "ग" पुस्तकपाठः ।

दिति मन्त्रे वहेर्लेटि सिपि रूपेणावाहनं कुर्यादित्यावहनस्यासिद्धत्वेन मानात् । आवहनोत्तरमस्य मन्त्रस्य बाधितार्थतापत्तेरिति प्राप्ते मानुषेण होत्रा देव होतारं प्रत्यावहेति प्रैषमात्रेक्षतेऽपि तदात्वएव देवास्तेनाहूताइत्यत्र मानाभावेनाग्निकृतदेवतावहनस्याधुनाऽप्यसिद्धत्वाभिप्रायेण मन्त्रलिङ्गोपपत्तेर्मन्त्रपाठानुसारेण होतृप्रवर एव पूर्वः ॥

## सू० आवह ॥ ७ ॥

अग्नेनेमिर्देवांस्त्वम्परिभूरस्यावह देवान्यजमानायेति मन्त्रे श्रुतमावाहनसमस्तदेवतानां स्यात् । त्वष्ट्रादीनामपि देवतात्वात्प्राकरणिकत्वाच्च । सन्निधानेन विशेषपरत्वे तु प्रयाजानामेव प्रथममिज्यमानत्वात्तद्देवतापरमिति प्रयाजलोपे मन्त्रलोप इति प्राप्ते ब्राह्मणानावह चैत्रं मैत्रं यज्ञदत्तञ्चेति लौकिकवाक्ये सामान्यवाचिनोऽपि ब्राह्मणपदस्य चैत्रादिमात्रपरत्वप्रतीतेरग्निमग्न आवहेत्याद्युत्तरवाक्येषु कीर्त्यमानानामेवैतदावाहनं न सर्वेषाम् ॥

## सू० आहवनीयः ॥ ८ ॥

अग्निमग्न आवहेत्यत्र वाह्यत्वं वाहकत्वं चैकस्यैव प्रतीयते । उभयोरग्निपदेन व्यपदेशात् । युक्तं चैतत् । स्वं महिमानमावहेति स्वाभिन्नस्य स्वमहिम्नः स्वेनैव वहनप्रतीतेः । स चोभयात्मकोऽग्निराग्नेयाज्यभागदेवतारूप एव । यदग्निमग्न आवहेत्याह तदाग्नेयाज्यभागायाग्निमावाहयतीति श्रुतेरिति प्राप्ते वहनकर्तृकर्मत्वयोरेकस्मिन्विरोधात्स्वमहिमपदस्यापि कौषीतके वायुपरत्वेन व्याख्यानात्सामिधेनीभिरिद्धाग्निमुपस्तुत्याग्निमग्नआवहेति श्रवणादाहवनीयरूपः प्रत्यक्षोऽग्निरेवावोढा । तेनाहवनीयभेदेऽप्याहितस्यैकत्वाद्दोपाधिकद्वित्वस्याप्रयोजकतयाऽऽमन्त्रिते वचनोहाभावेऽप्यवभृथेऽग्निमापआवहतेत्यादिरूहः ॥

## सू० अग्निंहोत्राय ॥ ९ ॥

यदग्निं होत्रायावाहयति स्विष्टकृतं तदावाहयतीति श्रुत्या होत्रार्थमोह्यमानोऽग्निः स्विष्टकृद्यागदेवतारूपः स्विष्टकृद्गुणकोऽग्निरेवेत्यव-

गतं यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीत इति श्रुत्यन्तरे चाहवनीये आहुतिसंयोगादिष्टः प्रीतश्च भवतीत्यवगमात् स्विष्टकृत्त्वमाहवनीयाग्नेरेव प्रतीयत इत्येकस्यैवावोढृत्वमोढृत्वञ्चेति द्वयमपि सम्पन्नं। तच्चौपाधिकभेदाङ्गीकारेणापि सूपपादमित्याहवनीय एव स्विष्टकृदग्निरित्यवभृथेऽग्निं होत्रा यावहेति निगदेऽप इत्यूहः। यत्तु भाष्ये देवतावोढुर्हव्यवोढुश्चैकत्वेनावहनहव्यवहनाभ्यां स्विष्टकृद्यागसम्बन्धादसति स्विष्टकृति सर्वहुते देवतावाहनस्यैव लोपइति। तन्न। तत्तद्देवतावाहने तत्तद्यागानामेव प्रयोजकत्वात्। स्विष्टकृद्देवतावाहने हव्यवहनस्यैव प्रयोजकत्वात्। स्विष्टकृद्यागलोपेऽपि तत्तत्प्रयोजकलोपाभावेन देवतावाहनलोपायोगादिति प्राप्तेऽभीत्युपसर्गयोगाद्विधातोरिच्छार्थकाच्चिष्पचेष्टशब्दार्थकर्तृत्वस्याहवनीयउपपादनेऽपि सूपसृष्टयजिधातुनिष्पन्नस्विष्टशब्दाभेदादेकस्यैवौपाधिकभेदाङ्गीकारेणोभयनिर्वाहकोपाधेरश्रवणादाहवनीयादन्य एवाग्निः स्विष्टकृत्॥

## सू० स गार्हपत्यः॥ १०॥

स आहवनीयादन्यत्वेन निश्चितो देवतारूप एव कश्चिदग्निः स्यात्। स्विष्टकरणे देवताया एव सामर्थ्यादिति प्राप्ते गार्हपत्यः स्विष्टकृद्भवतीति वचनात्तस्यापि कतिपयाहुतिसंयोगेन स्विष्टकृत्त्वसम्भवाद्गार्हपत्याग्न्यधिष्ठातृदेवताविशेष एव स्विष्टकृत्॥

## स होमाय॥ ११॥

स चोह्यमानो होमार्थमेव। होत्रशब्दस्य होमपरत्वात्। कतिपयहोमाधिकरणत्वस्य तत्रापि सत्त्वात्। यस्मिन्नेवैतदग्नावाहुतयो हूयन्त इत्यादिना होमार्थत्वश्रवणाच्चेति प्राप्ते होतुः कर्म होत्रं तच्च हव्यप्रापणं। हव्यावह यविष्ठ याते अद्य यथा वो येन पथा हव्यमावो वहानीत्यादिमन्त्रलिङ्गेन तथा निर्णयात्। होत्रायेति तादर्थ्यचतुर्थ्या च हव्यवहनप्रयोजनकत्वप्रतीतिः। अतः शंयन्तासु पत्नीसंयाजाभावेऽपि भवेदेवाग्निं होत्रायेति निगदः॥

## सू० होत्रीयष्टु ॥ १२ ॥

स्वं महिमानमावहेत्यत्र स्वशब्दस्यात्मीयपरत्वेन सम्बोधनीयाहवनीयपरत्वावश्यम्भावात्तन्निष्ठस्य होतृत्वयष्टुत्वादिधर्मनिकरस्यैव महिमरूपतया तद्धर्मविशिष्टो भवत्येतदर्थेको ऽयन्निगदश्चाहवनीयपर एवेति प्राप्ते ऽथ यत्स्वं महिमानमावाहयति वायुं तदावाहयति वायुर्वा अग्ने स्वोमहिमेति कौषीतके श्रवणाद्वायुपदस्य च वायोरग्निरित्यादिश्रुत्या जनकपरत्वेनाहवनीयजनकगार्हपत्यपरएवायं निगदः । होतृत्वादिधर्माश्च देवतावोढृत्वेनाहवनीय इव हव्यवोढृत्वेन गार्हपत्येऽपि सम्भवन्तीति न त आहवनीयासाधारणाः । अग्ने यदद्यविशो अध्वरस्य होतः पावकशोचेवेष्टुंहियज्वेति स्विष्टकृत्यपि प्रयोगात् । तस्मादेकस्यैव गार्हपत्यस्य हव्यवोढृत्वेनाहवनीयजनकत्वेन चावाहनम् । आवाह्यतावच्छेदकभेदावहतेरावृत्तिः । तेन पितृमेधे वाक्यद्वयस्यापि स्थानेऽग्निं कव्यवाहनमावहेत्येक एव निगदः ॥

## सू० अतूर्त्तः ॥ १३ ॥

अतूर्त्तो होता तूर्णिर्हव्यवाडिति वाक्ये हव्यवाहनलिङ्गाद्गार्हपत्य एवाभिधीयत इति प्राप्ते देवेद्धोमन्विद्ध इत्युपक्रमे समिध्यत्वलिङ्गेन सामिधेनीभिः स्तुतस्याहवनीयस्यैवैष वादः ॥

## सू० आचाग्ने ॥ १४ ॥

अग्निं होत्रायावहेत्युपक्रम्याचाग्ने देवान्वह सुयजा च यज जातवेदइत्यत्रापि गार्हपत्यवादे प्राप्तेऽग्निमग्नआवहेति सर्वोपक्रमे सम्बोधितस्येहापि प्रत्यभिज्ञानादाहवनीयस्यैव वादः ॥

## सू० स्वाहाऽग्निम् ॥ १५ ॥

उत्तमप्रयाजे स्वाहा ऽग्निं होत्राज्जुषाणा इत्यत्र होत्रायेति तादर्थ्यस्यानाम्नानात्प्रयाजदेवताया अग्नेरेव वादउपक्रान्तत्वादिति प्राप्ते स्वाहादेवानाज्यपानित्यस्योत्तरपाठादेव स्थानाद्यदनिष्ठाभ्यो देवताभ्यः स्वाहा करोतीति वचनेन यक्ष्यमाणदेवतेज्याप्रतीतेर्होत्रादित्यनेन हव्यव-

हनननिमित्तकत्वस्य सौविष्टकृतहविर्जोषणे भृतिरूपे प्रतीतिसम्भवात्स्विष्टकृत एवैष वादः ॥

## सू० अग्निर्होत्रेण ॥ १६ ॥

सूक्तवाकाग्ने त्वं सूक्तवागसीति सम्बोधनस्य स्वाभिमुखावहनीयपरत्वेन सूक्तवागसीति सूक्तवचनसंबन्धेन होतृत्वाध्यवसायादग्निर्होत्रेणेदं हविरजुषतेत्यत्र सहार्थतृतीयया होतृकर्मसाहित्यमात्रप्रतीतेस्तावन्मात्रस्य च तूर्णिर्हव्यवाडित्यादाविवौपचारिकोक्तेराहवनीयेऽपि सम्भवादग्निर्होत्रेणेत्यपि तस्यैव वाद इति प्राप्ते इत्थम्भूतलक्षणतृतीयया स्थानाद्गार्हपत्यस्यैव वादः । सूक्तवचनसम्बन्धस्याहवनीयपरत्वेऽपि हविर्जोषणप्रायपठितस्य गार्हपत्यपरत्वावश्यम्भावात् ॥

## सू० अयाडग्निः ॥ १७ ॥

स्विष्टकृद्याज्यानिगदेऽयाडग्निरग्नेः प्रियाधामानीत्यत्राहवनीयस्योपक्रान्तत्वेन यत्तदग्नेरित्यत्रापि तस्यैव वादः । जातवेदा जुषतां हविरिति हविर्जोषणलिङ्गेन गार्हपत्यस्य पृथङ्निर्दिष्टत्वादिति प्राप्ते स्थानादेव गार्हपत्यस्यैव वादः तस्यैव सोऽध्वरेत्यनेन प्रकृतहविर्जोषणाभ्यनुज्ञार्थं पुनर्निर्देशोपपत्तेः ॥

## सू० अग्निर्देवः ॥ १८ ॥

अध्वर्युप्रवरनिगदेऽग्निर्देवो होता देवान्यक्षदित्यत्र होतृयष्टृत्वयोरुभयसाधारण्यादनियमे प्राप्ते उत्तरत्र ब्रह्मण्वदा च वक्षदित्यावोढृत्वलिङ्गादाहवनीयवाद एव ॥

## सू० अग्निर्होता ॥ १९ ॥

स्रुगादापननिगदेऽग्निर्होता वेत्त्वित्यत्राप्यनियमे प्राप्तेऽग्निर्होतेत्याहाग्निर्वै देवानां तं वृणीते इत्युक्त्वा यो ऽग्निं होतारमवृथा इत्याहवनीयं पुनर्वृणीत इति श्रवणात्पुनरित्यनेन पूर्ववृत्तस्य होतुरग्नेराहवनीयत्वं गम्यते । ज्वलनस्य देवतायाश्च परस्पराभेदेन बहुशो व्यवहारदर्शनात् ॥

इति सङ्कर्षे भाट्टदीपिकायां षोडशस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

हौत्राध्याये निगदपादोऽयम् ॥

# अथ षोडशाध्याये तृतीयः पादः ।

## सू० इमे वयम् ॥ १ ॥

स्रुगादापनमन्त्रे शाखाभेदेनेमे वयं स्मो वयमिति पाठौ द्वावपि विनिन्द्य वेत्तु प्रावित्रमित्येव ब्रूयादिति विहितं । तथा नमस्यामनमस्या नित्यंशोऽपि शाखाभेदेन प्रथमतो मध्यतोऽन्ततश्च पठितः तत्राद्यद्वयं विनिन्द्यान्तत एव ब्रूयादिति विहितं । तत्र निन्दाया विहितस्तुत्यर्थत्वेन विकल्पे प्राप्ते निन्दितस्य गिरापदवत्कर्मान्तरे सावकाशत्वाद्यथाविधान-मेवानुष्ठानम् । आपादितयोराम्नातयोर्विकृतौ विकल्पार्थत्वमिति भाष्ये विकृतिशब्दो ब्रह्मयज्ञादिपरो नेयः ॥

## सू० वषडित्येके ॥ २ ॥

वौषडिति वषट् करोतीति सामान्येन विधाय वषडित्येके वौत्ता-डित्येके षडित्येके वात्तडित्येक इति कल्पान्तराणि विधाय वषडिति ब्राह्मणस्य वषट् कुर्याद्वौषडिति राजन्यस्य वौत्ताडिति वैश्यस्य षडिति शूद्रस्येति निमित्तसंयोगेनाप्याम्नातम् । अत्र पञ्चानां तुल्यवद्विकल्पः ब्राह्म-णस्येत्यादयो ऽवयुत्यानुवादा इति वृत्तिकृतां पक्षे प्राप्ते भाष्यकार आह । ब्राह्मणादिवाक्यानां वैयर्थ्यस्यायुक्तत्वाद्बृहस्पतिसव-राजसूय-वैश्यस्तो-मेषु क्रमेण त एव शब्दा नियताः नैमित्तिकैरन्येषां बाधात् । नित्यस्या-वशिष्टानां वषट्काराणां चान्यत्र तुल्यवदेव विकल्प इति । वस्तुतस्तु एतत्पक्षेऽपि ब्राह्मणादिशब्दानान्तत्तन्मात्राधिकारिककर्मविशेषे लक्षणाप-त्तेस्तत्कर्तृककर्मसामान्यसम्बन्धस्यैव सप्तदश वैश्यस्येत्यादाविव प्रतीतस्य बाधापत्तिः । अतो नैमित्तिकविधिभिः सामान्यतो विहितानामुपसंहारः । अनुपसंहृतानां तु पक्षाणां सर्वकर्मसु सर्वेषां विकल्पः । शूद्रशब्दस्तु त्रैव-र्णिकातिरिक्ते लाक्षणिकः सन्निषादादिपरस्तान्निककर्माभिप्रायो वा ॥

## सू० सन्ततम् ॥ ३ ॥

याज्यया यजति वषट्कारेण प्रदीयत इति विधिभ्यामुभयोः प्रदानार्थत्वावगतेरेकार्थत्वाद्वृग्जुवाणाधिकरणन्यायाद्विकल्पः ततश्च सन्ततमृचा वषट्कृत्यमिति विधावनवानसन्तानयोर्विधानायोगादेकश्रुतिरूपः स्वरविशेष एव सान्तत्यं । यज्ञकर्मण्यजपन्यूङ्खसामस्विति स्मृतेः । एकश्रुतित्वं च तदन्तर्गतास्वराणामेकजातीयस्वरकत्वं । तच्च यथा याज्यायां तथैव वषट्कारे इत्यर्थः । उच्चैर्वषट् करोतीति श्रुत्या "उच्चैस्तरां वा वषट्कार इति स्मृत्या च विहितयोर्वैकल्पिकस्वरयोस्तु नैकश्रुत्या सह विरोध इति प्राप्ते याज्यावषट्कारोभयोद्देशेन स्वरविधौ वाक्यभेदात्सन्तानस्यैवायं विधिः । न च विकल्पितयोः सन्तानासम्भवः । एतद्बलादेव समुच्चयस्यापि लाभात् । कथमन्यथा याज्याया अधिवषट्करोतीति याज्यावषट्कारयोः क्रमविधानं सङ्गच्छेत । एकश्रुतिस्तु समानवदृचा वषट्करोतीति वचनान्तरात्सेत्स्यति ॥

## सू० अवगूर्य ॥ ४ ॥

आगूः शब्दस्येवावगूर्येत्यस्यापि येयजामहवाचित्वादवगूर्य वषट्करोतीति वचनेन तदानन्तर्यस्य वषट्कारे कण्ठरवेण विधानाद्याज्यावषट्कारसमुच्चयपक्षस्य च ज्ञापकसिद्धत्वेन निरपेक्षप्रदानार्थत्वबोध्यविकल्पाद्दुर्बलतया चासार्वत्रिकतया एव वक्तव्यतया यदा समुच्चयस्तदा याज्योर्ध्वं वषट्कारः यदा केवलो वषट्कारस्तदा ये यजामहव्यवहितोत्तरमेव प्रयोक्तव्य इति प्राप्ते किञ्चिद्व्यवधानेऽपि भुक्त्वा गत इत्यादौ लोके पुरोऽनुवाक्यामनूच्य याज्यया जुहोतीति वेदेऽपि क्त्वाप्रत्ययप्रयोगात्समुच्चयविकल्पयोर्विकल्पकल्पनस्यात्यन्तजघन्यत्वादुत्तरकालतायामेवावगूर्येति ल्यप् । वस्तुतस्तु आधानाव्रधानयोरानयनावनयनयोराहारावहारयोरुपसर्गभेदेनार्थभेदस्य बहुशो दर्शनादवगोरणस्य बधाध्यवसायपरत्वेनान्यत्र प्रयोगादिह तदसम्भवेऽपि लक्षणयोच्चैरुच्चारणाध्यवसानमेवार्थः ॥

## सू० यं कामयेत ॥ ५ ॥

वषट्कारमेव प्रकृत्याम्नायते । यं कामयेत प्रमायुकः स्यादिति नीचैस्तरां तस्य याज्याया वषट् कुर्यादित्यस्यान्ते उच्चैः क्रौञ्चमिव वषट् कुर्यात्स्वर्गकामस्येति श्रुतौ द्वावपि काम्यविधी कुर्यादिति लिङ्श्रुतेरविशेषात् । दीर्घरोगसन्तप्तस्य प्रत्याख्यातभिषक्क्रियस्य मरणकामनाया अपि सम्भवात् । अन्यथा तादृशस्यात्महननविधेः स्मृतिषु वैयर्थ्यापत्तेः । सर्वस्वारादिश्रौतकर्मस्वपि मरणकामाधिकारिकतादर्शनात् । पुरुषाभिप्रायाणां विचित्रत्वात् । वस्तुतस्तु यः प्रमायुकः स्यामित्यानुकत्या होतृगत एवैष कामः प्रतीयते । स च द्वेष्ये यजमाने सम्भवत्येव । अत एव ऋत्विगाचार्यौ नातिचरितव्याविति स्मृतिरपि दृष्टार्था सती युज्यते । न चादधीतेत्युपग्रहविशेषविरोधः । यस्मिन् जात एतामिष्टिं निर्वपति पूत एव स इति श्रुत्येव क्वचिदपवादस्यापि सम्भवात् । अत एव प्रउगशस्त्रे सप्तदेवताः शंसतीति सप्तानां तृचानां शंसनं होतुर्विधाय स यजमानस्य पापभद्रमाद्रियेतेति हस्माह योऽस्य होता स्यादित्यत्रैवैनं यथा कामयेत तथा कुर्यादित्युपक्रम्य यं कामयेत प्राणेनैनं व्यर्धयानीति वायव्यमस्य लुब्धं शंसेदृचं वा पदं वातीयादित्यादिना तृचभेदेन तत्तद्गतपदादिलोपेन यजमानस्य प्राणादिसप्तकव्यृद्धिर्होतृकाम्यमानाप्रतिपादितापपद्यते । तस्मात्प्रधानफलमङ्गफलं वा यजमान तदितरसाधारणं यथावचनं स्वीकार्यं । प्रकृते च होतृपदाश्रवणेऽप्यैतरेयब्राह्मणे प्रउगसजातीयस्यैव वाक्यस्य श्रवणाद्धोतुरेवायं काम्यो विधिरिति प्राप्ते ऽनवधिकदुःखरूपस्य मरणस्य सर्वथाऽनिष्टत्वेन तदधिकृतदेकजन्यफलान्तराभावेन तस्य नान्तरीयकत्वाभावाच्च सर्वस्वारमरणादौ साधनान्तरकथनाच्चाविचिकित्स्यरोगवतां मरणविधेरभ्यनुज्ञामात्रत्वाच्च न यजमानस्य कामः सम्भवतीति स्वर्गकामविधेरयमर्थवाद एव । जर्त्तिलवाक्यादाविव विधिप्रत्ययस्याविधायकत्वात् । विषं भुङ्क्ष्व मा चास्य सद्मनि भुङ्क्था इति लौकिकवाक्येऽपि पूर्वविधेरुत्तरविध्युपपादकतयैकवाक्यतादर्शनात् । नापि होतुः कामः अनन्यथासिद्धापवादादर्शनात् । प्रउगशस्त्रेऽपि यम् कामयेत

सर्वैरेनमङ्गैः सर्वेणात्मना समर्धयानीत्येतदेवास्य यथापूर्वमृजुक्लृप्तं शंसेदिति विधेरर्थवादत्वेनैव सप्तवाक्यानामुपपत्तेः ॥

## सू० यस्यै ॥ ६ ॥

यस्यै देवतायै वषट्कुर्यात्तां ध्यायेदिति विहितं देवताध्यानमविहितकालनियमेन यदा कदाचन कुर्यादिति प्राप्ते जातमञ्जलिना गृह्णाति जातमभिप्राणितीत्यादौ जननाव्यवहितोत्तरकालस्य सामर्थ्येनापि नियमनदर्शनाद्देवतार्चनविधौ ध्यानस्य प्राथमिकदर्शनाद्वषट्कारात्पूर्वमेव देवताध्यानं । वस्तुतो यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्साक्षादेव तद्देवतां प्रीणातीति वचनान्तरेणैव कालनियमः॥

## सू० एवं वा ॥ ७ ॥

कान्तां ध्यायन्नास्त इत्यादौ तद्रूपध्यानस्येव प्रकृतेऽपि देवतारूपध्यानविधिः। अर्थवादेषु देवतारूपाम्नानात् । विध्यपेक्षितघृतादिनियमांशे तस्य प्रामाण्याच्च । देवतायाः फलदातृत्वं स्वरूपेण कर्माङ्गत्वं च धर्माणां तत्प्रयुक्तता चेत्येतत्त्रितयनिरासेनैव सामञ्जस्ये विग्रहनिरासस्य देवताधिकरणार्थत्वाभावात् । तथात्वे तिर्यगधिकरणे तेषामनधिकारसाधनमनर्थकं स्यात् । असदेव वा रूपमीदृशविध्यपेक्षितार्थनियमनार्थतयोपदिश्यत इत्यपि सुवचं । न च शब्दद्वारेणैव देवतायाः कर्माङ्गतया शब्दस्यैव मानसमुपनीतभानमङ्गत्वेन विधीयत इति वाच्यं । यद्धि मनसा ध्यायति तद्वाचा वदतीति व्याप्त्या याज्यानुवाक्यान्तर्गतदेवताशब्दोच्चारणतः पूर्वं नियमतस्तत्सत्त्वेन तस्याविधेयत्वादिति प्राप्ते सर्वत्रापि प्रथमोपस्थिते शब्दे कार्यस्यासम्भवादेव हि तदर्थपर्यन्तानुधावनं । नच प्रकृते तदसम्भवः । सङ्कल्पपूर्वकशब्दध्यानविशेषस्येह विधेयत्वात् । याज्योच्चारणपूर्वनियतशब्दध्यानस्य होतुः सत्त्वेऽपि हविर्ग्रहणाव्यवहितोत्तरकालं यजमानस्यैतद्विधिसार्थक्यात् । तस्माद्देवतारूपः शब्द एव ध्यातव्यः ॥

## सू० वषट्कृत्य ॥ ८ ॥

क्वचिच्छाखायां वषट्कृत्यापान्यान्निमिषदपानेनैव प्राणं दधाति निमिषेण चक्षुरिति श्रुतं वषट्कृत्य प्राण्यादथापान्यादथ निमिषेदिति तु शाखान्तरे। तत्र शाखाभेदेन केषांचिद्विधिद्वयं केषां चिद्विधित्रयमेतद्विति प्राप्ते ऽपाननार्थवादस्यापाननविध्युत्तरमेव युक्तेऽपि पाठेऽपाननानिमेषविध्योरुत्तरमर्थवादद्वयश्रवणेन वषट्कृत्येत्यस्य निमेषविधावप्यनुषङ्गप्रतीतेरपाननिमिषयोर्वषट्काराव्यवहितोत्तरकाल एव प्राप्तौ शाखान्तरे वषट्कारोत्तरं प्राणनस्यैकस्यैव विधिः इतरयोः क्रमार्थमनुवादः॥

## सू० न व्यपवदेत् ॥ ९ ॥

याज्यां चानुवाक्यां चान्तरा न व्यपवदेद्यद्व्यपवदेद्यज्ञं विच्छिन्द्यात्पूरोऽनूच्यं यज्ञस्य सन्तत्या इति श्रुतौ पुरोऽनुवाक्यातः पूर्वं वाग्व्यवहारो यज्ञसन्ततिफलको नियम्यत इति प्राप्त उत्तरकाले वाग्यमनस्य विहितत्वात्तत्प्रागभावस्य तत्स्थैर्यार्थोऽयं वादः॥

## सू० सहोत्तमेन ॥ १० ॥

स्वाहा देवा आज्यपा जुषाणा इत्युत्तमप्रयाजयाज्यायां श्रुतं यद्यपि देवां आज्यपां आवहेत्यावहनमन्त्रैः प्रयाजानुयाजदेवता मिलित्वा कीर्त्तिताः। यद्देवां आज्यपां आवाहयति प्रयाजानुयाजांस्तदावाहयतीति श्रुतेः। तथाऽपि तं स्वाहाकारेण प्रयाजेषु समस्यापर्यवेति श्रुत्या यज्ञसमाप्तेरिव कीर्त्तनाद्यदनिष्टाभ्यो देवताभ्यः स्वाहा करोतीति श्रुत्यन्तराच्च प्रयाजानामिष्टत्वेनानिष्टानामनूयाजदेवतानामेवेदं कीर्त्तनं। तेनातिथ्यायामस्यांशस्य लोपः। अपवर्हिषोर्द्विवचनान्तोहश्च। अस्तु वाऽनिष्टत्वाविशेषेणोत्तमप्रयाजदेवतायाअष्टाभिधानमित्यातिथ्यायामेकवचनान्त ऊहएवेति प्राप्ते उत्तमप्रयाजस्याग्न्येकदेवताकत्वेन यदनिष्टाभ्य इत्यर्थवादस्याज्यभागादिदेवतापरत्वेनाप्युपपत्तेर्मान्त्रवर्णिकदेवताकीर्त्तनस्य सम-

रणरूपसंस्काराधायकत्वेन तस्य चेष्टानिष्टसाधारण्येनाविस्मरणफलकत्वे- नावाहनमन्त्रवैलक्षण्यायोगेन प्रयाजानूयाजदेवतानां सर्वासामभिधानम् ॥

## सू० जुषाणः ॥ ११ ॥

आज्यभागयोर्जुषाणो अग्न आज्यस्य वेतु । जुषाणः सोम आ- ज्यस्य हविषो वेत्त्विति निगदरूपौ याज्यमन्त्रौ श्रुतौ । ऋचूपावेकेषां जुषाणा याज्यौ भवतः ऋग्याज्यौ भवतः सहविषौ भवतोऽहविषौ भवत इति च विधयः । तत्र ऋग्जुषाणयोर्विलक्षणार्थप्रतिपादकत्वेन कार्य- भेदात्समुच्चयः । सहविष्काहविष्कयोस्तु पदमात्रसदसद्भावकृतभेदेऽपि प्रतिपाद्याभेदादुत्तमप्रयाजयाज्यायां हविःपदस्येव विकल्पः कार्यैक्या- दिति प्राप्तेऽर्थप्रतिपादनरूपद्वारभेदेऽपि मुख्यविशेष्यभूतप्रदानप्रकाशनरू- पकार्यैकत्वादृग्जुषाणनिगदयोर्विकल्पः । याज्यावषट्कारयोस्तथात्वेऽपि वाचनिकः समुच्चय इत्युक्तं । हविःपदविषये त्वहविः सहविःपदयोः समिद्घृतन्यायेनोक्तयोरेव निगदयोः प्रयोगसम्भवादनुवादमात्रम् । उत्तम- प्रयाजे तु शाखान्तरीयं हविःपदरहितं निगदांशमनूद्याग्नआज्यस्य व्यन्त्विति हैक आहुर्न तथा कुर्यादिति निषिध्य विनिन्द्य तस्मात्स्वा- हादेवा आज्यपा जुषाणा अग्न आज्यस्य हविषो व्यन्त्वित्येव ब्रूयादिति निगमनादुदितानुदितहोमवद्विकल्पः । प्रकृते तु हविष इत्युत्तरमाहेति वचनान्तरेण व्यवस्थापनान्न सहविषावहविषा इत्यनयोर्विधित्वम् ॥

## सू० गायत्री ॥ १२ ॥

दर्शपूर्णमासप्रकरणे गायत्रीपुरोऽनुवाक्या भवति त्रिष्टुब्याज्या त्रि- पदापुरोऽनुवाक्या भवति चतुष्पादा याज्या । पुरस्ताल्लक्ष्मापुरोऽनुवाक्या भवत्युपरिष्टाल्लक्ष्मा याज्या । मूर्धन्वती पुरोऽनुवाक्या भवति नियुत्वती- याज्येत्येवं जातीयकानि बहूनि वाक्यानि श्रूयन्ते । अग्निर्मूर्धेत्येषर्क् त्रिपदा गायत्री । प्रथमपादएव देवतापदवती मूर्धपदवती च । भुवोयज्ञस्येति तु चतु- ष्पदा त्रिष्टुप् उत्तरार्धदेवतापदवती नियुत्पदवती च । एवमन्या अप्यृचो य-

थासम्भवं वर्त्तन्ते । तेनैनयोरेव क्रमप्रकरणाभ्यां प्राप्ताङ्गताकयोर्ऋचोः स्तावकानि नित्यानुवादरूपाणि वाक्यानीमानीति प्राप्ते क्रमादिना तत्तद्भक्तित्वस्याङ्गतावच्छेदकत्वेन बोधितस्य बाधेन गायत्रीत्वादिधर्माणामङ्गतावच्छेदकत्वबोधनेन सार्थक्यसम्भवेन केवलं नित्यानुवादः । तेन भावनासंस्पर्शेन विवक्षिततयाऽर्थिकत्वाभावेन चोदकतस्तेषामप्यतिदेशे यस्यां विकृतावेतद्विरुद्धा ऋच आम्नातास्तत्रोपदेशेनैवातिदेशबाधः । यास्त्वनाम्नातयाज्यानुवाक्याका विकृतयस्तत्र सति सम्भवे आनीयमाना ऋचश्चोदकातिदिष्टधर्मका एवानेया इति सिध्यति, तेन धर्माणां विकृतौ सम्भवत्समुच्चयो यथायथं बोध्यः ॥

## सू० गायत्र्यौ ॥ १३ ॥

दर्शपूर्णमासयोरेव गायत्र्यौ संयाज्ये ब्रह्मवर्चसकामस्य त्रिष्टुभौ वीर्यकामस्येत्यादि श्रुतं । पिप्रीहि देवानग्ने यदद्येत्यनयोस्त्रिष्टुभोर्नित्यवदाम्नातत्वेन केवलकाम्यप्राये तयोर्विशिष्य पाठाभावेन च तादृशावृचावन्ये वीर्यकामस्यागमयितव्ये इति प्राप्ते त्रिष्टुप्छब्देनापि द्रव्यवचनेन सन्निहितयोर्ऋचोः परामर्शसम्भवात्संयोगपृथक्त्वेनोभयार्थता ॥

## सू० अनुष्टुभौ अयाट् ॥ १४ ॥

स्विष्टकृन्निगदे अयाड्देवानामाज्यपानां प्रियाधामानीत्यंशेन प्रयाजदेवता एवाभिधीयन्ते तासामेवेष्टत्वात् । यदनिष्टाभ्यइत्यस्यार्थवादत्वेनाविवक्षितार्थत्वेऽपि मन्त्रस्य तथात्वायोगात् । अयाडिति भूतार्थकलकारश्रवणाद्वाक्यगम्यार्थस्य लिङ्गेन बाधादिति प्राप्ते सर्वकालेष्वपि "छन्दसि लुङ्लङ्लिट" इति विधानदर्शनादिष्टानामनिष्टानामपि स्मरणसंस्कार्यत्वस्याविशेषात्प्रयाजानूयाजदेवतानामुभयासामभिधानम् । अत एव यदयाड्देवानामाज्यपानामिति तत्प्रयाजानूयाजानामिति शाखान्तरीयं वचनं न्यायसिद्धानुवादकमुपपद्यते । तस्मादप्रयाज उदयनीयेऽपि न तल्लोपः ॥

## सू० अनवानम् ॥ १५ ॥

अनुयाजान्प्रकृत्यानवानं यजतीति श्रुतं । शाखान्तरे चोत्तमेनावान्यादिति श्रूयते । तत्रानुयाजत्रयसामान्येन प्राप्तस्यानवानस्योत्तम उपसंहार इति प्राप्ते उत्तम इति वाक्यस्यानुवादकत्वेन विशेषविधित्वाभावान्नोपसंहारकत्वं । सूत्रेऽप्यनुवादपदमनुवर्त्तयितव्यमिति भाष्यकारः । बर्हिर्नराशंसयाज्ययोरल्याक्षरत्वेन तावन्मध्येऽवानस्य कादाचित्कत्वेन प्राप्तावनवानोच्चारणं नियम्यते । स्विष्टकृदनुयाजयाज्यायास्त्वतिदीर्घत्वान्मध्येऽवाननं नित्यमेव प्रसक्तमतस्तस्य प्रतिषेधः । तेनानयोर्भिन्नविषयत्वाद्विधिप्रतिषेधरूपत्वाच्च नैकेनान्यस्योपसंहारः । एवं सत्यपि प्राणाभ्यासशालिनो दीर्घयाज्यायामपि कदाचिदवाननस्याप्राप्तिरप्यस्तीत्येतावन्मात्रेण पाक्षिकीं प्राप्तिमादाय परिधौ पशुन्नियुञ्जीतेति विधेरिव नियमविधित्वं तृतीयानूयाजांशेऽपि सम्भवन्न निरस्तुं शक्यम् । अतएव सकृदवान्यादेवमप्यनवानमिति न्यायसिद्धस्यैव गौणानवानस्य कण्ठतोऽनुवादेनानवानं यजतीति विधिगतानवानपदं गौणमुख्यसाधारण्येन व्याचक्षाणा श्रुतिरनूयाजत्रयविषयकत्वं विधेरनुमन्यते । अतस्तेनैव सिद्धौ प्रतिषेधोऽनुवादत्वान्नोपसंहारक्षम इत्याशयः ॥

## सू० उपांशु ॥ १६ ॥

पत्नीसंयाजेषूपांशुयाजे चोपांशु यजतीति विहितमुपांशु यजतीति विहितमुपांशुत्वं साक्षाद्यागेऽसम्भवात्तदङ्गमन्त्रेष्वविशेषात्सर्वेषु निविशत इति प्राप्ते प्रैषार्थादिप्रतिपत्त्यर्थत्वेनाश्रुतप्रत्याश्रुतप्रणववषट्कारादिभिन्नमन्त्रेष्वेव वस्तुसामर्थ्यादुपांशुत्वम् ॥

## सू० आज्येडा ॥ १७ ॥

औषधेडाया इव आज्येडाया अपि प्रकरणे पाठात्प्राकरणिकसर्वयागानामाज्यसापेक्षत्वेन तत्संस्कारकत्वात्तद्द्वारेयं सर्वेषामङ्गमिति प्राप्ते येनाज्येन पत्नीसंयाजा इष्टास्तच्छेषेणैवाज्येडायाः कथनात्तस्यैवाज्यसंस्कारद्वारा पत्नी-

संयाजमात्राङ्गम्। एवमौषधेडाप्याग्नेयादीनामेव। तेन शंय्विडान्तेषु नाज्येडा॥

## सू० पराचीम्॥ १८॥

इडामेव प्रकृत्य यं कामयेतापशुः स्यादिति पराचीं तस्येडामुपह्वयते। यं कामयेत पशुमान्स्यादिति प्रतीचीं तस्येडामुपह्वयत इति श्रुतौ प्रत्यक्छब्देन प्रत्यङ्मुखता कर्त्तुरुच्यते। एवं पराक्छब्दोऽपि समुखं प्रत्युपह्वयत इति वचनान्तरादिति प्राप्तेऽभ्यासानभ्यासवचनावेतौ शब्दौ। पराचीः सामिधेनीरन्वाह पराग्बहिष्पवमानेन स्तुवत इति प्रयोगात्। यदिडोपहूतेति तत्पराची यदुपहूतेडेति तत्प्रतीचीत्याम्नानाच्च। अभ्यासस्तु इडोपहूतोपहूतेत्येक इत्यादिनाऽनेकविधो यः प्रतीयते तस्यायं प्रतिषेधः। मुखं प्रतीति तु मुखसंमितामवस्थापयेदित्यर्थकम्। इष्टकानां तु मुखासम्भवादशब्दत्वाच्च कर्त्तुर्मुखवाद एवाश्रितः॥

## सू० चतुः॥ १९॥

चतुरुपह्वयत इति विधिनेडानिगदः सर्वोऽपि चतुर्वारमावर्त्तनीयः। चतुरनुवाकः पठ्यतामित्यादौ तथा दर्शनादिति प्राप्ते इडोपहूतेति पदे एव प्रकृत्यास्यपाठात्पदविषयिण्येवावृत्तिः समिद्घृतन्यायेनायम्पदवादः॥

## सू० यद् ब्रूयात्॥ २०॥

सूक्तवाकनिगदे यद् ब्रूयात्सूपावसाना च स्वध्यवसानाचेति प्रमायुको यजमानः स्यादिति विनिन्द्य सूपचरणाच स्वधिचरणा चेत्येव ब्रूयादित्येवमादयो विधयः श्रूयन्ते। तेषु श्रुतस्यापि गिरापदस्य निषेधेनैरापदविधिना गिरापदघटितमन्त्रस्यान्यत्र विनियोगकल्पनवदश्रुतस्य पदस्य निषेधेन श्रुतदृढीकरणेऽपि निषेधानुमितस्याश्रुतपदप्रयोगस्य विकृतौ निवेश इति प्राप्ते शाखान्तरे सूपचरणा चेति पाठं विनिन्द्य सूपावसानाचेत्यस्यैव विधिदर्शनादुभयोरपि प्रकृतौ विकल्पेन निवेशः॥

## सू० यन्न निर्दिशेत् ॥ २१ ॥

आशास्तेयं यजमानोऽसाविति यजमाननामनिर्देशस्य विधिनिषेधाभ्यां षोडशिप्रकृत्य यन्न निर्दिशेत् प्रतिवेशं यज्ञस्याशीर्गच्छेत् यजमानोऽसाविति निर्दिश्यैवैनं सुवर्गं लोकं गमयतीति श्रुतौ नामनिर्देशस्य विधिनिषेधाभ्यां षोडशिन इव विकल्पे प्राप्ते यन्न निर्दिशेदित्ययं नित्यानुवादः । अनिर्देशस्यैवोत्तरत्र निन्दितत्वात् । अनिर्देशस्य प्रापकान्तराभावात् । अतो नित्यं निर्देशः ॥

## सू० नाम ॥ २२ ॥

नामानि गृह्णीयात् । नाम गृह्णीयादिति च श्रुतं । यजमानस्यामुकत्वेन ज्ञापनार्थत्वाद्बहुनामशालिनोऽपि यत्किञ्चिदेकं नाम ग्राह्यमतो विधौ बहुत्वमविवक्षितमिति प्राप्ते द्व्यक्षरचतुरक्षरनामानि कुर्यादिति विधाय सोमयाजितृतीयं नाम कुर्वीतेति विधिना बहुनामविधेः सोमयाजिपरत्वेनोपसंहारादितरेषां द्वे एव नामनी इति स्थितिः । एतेषां च विधीनां वैयर्थ्यापत्तेर्नामानि गृह्णातीत्येक एव विवक्षितसङ्ख्योविधिः । एकवचनघटितस्त्वश्रुत्याऽनुवादः । एतद्वशादेवासोमयाजिनामपि यज्ञकाम इति तृतीयं नामेति केचित् । नामानीत्यस्यैकत्वातिरिक्तसङ्ख्यापरत्वेन सुव्याख्यत्वाच्च यज्ञकामपदे प्रमाणमिति भाष्याशयः ॥

इति संकर्षे भाट्टदीपिकायां षोडशस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

हौत्रकाध्याये नाम्ना वषट्कारपादोऽयम् ॥

—o—

# अथ षोडशाध्याये चतुर्थः पादः ।

## सू० एते वै ॥ १ ॥

पृथुपाजवत्यौ धाय्ये भवतः अनुपदौ वाज्यभागावित्यादयोऽनारभ्यवादाः प्रकृतौ निविशेरन्निति प्राप्ते पञ्चदशसङ्ख्याहारसङ्ख्यादिविरोधाद्वार्त्रघ्नीवृधन्वत्यवरोधाच्च विकृतावुत्कृष्येरन् ॥

## सू० काम्येष्टिः ॥ २ ॥

अनुपदावाज्यभागाविति विकृतौ निविशमानमपि काम्येष्टिष्वेव तदीयफलार्थत्वात् । अत एवादिदेशिकमन्त्रकाधोऽपि काम्येष्टिषु । वस्तुतोऽनुपदसञ्ज्ञकमन्त्राणामभावात्पदं स्वस्थानमनुगताविति व्युत्पत्त्या प्राकृतावेवेत्यर्थः । एवमुक्तिश्च पौर्णमास्यमावास्याविकृतिषु वार्त्रघ्नादिव्यवस्थासिध्यर्था । तस्याः सर्वस्या न्यायेनैव सिद्धत्वान्नित्यानुवादोऽयमितिप्राप्ते कौषीतके सर्वासु विकृतिषु सद्वन्तावाज्यभागाविति विधिभिरपोदितानां प्राकृतमन्त्राणां प्रतिप्रसवार्थोऽयं विधिः । तेन विकृतिषु सद्वन्तौ वा प्राकृतौ वेति विकल्पः ॥

## सू० वामदेवस्य ॥ ३ ॥

सन्ति वामदेवेन दृष्टाः पञ्चदशर्चः । अगस्त्यस्य कयाशुभीयसंज्ञा अपि तावत्यः ताः प्रत्येकं प्रकृत्य सामिधेन्यः स्युर्याज्यानुवाक्याश्चेत्याम्नातं । तत्र चकारादुभयत्र सर्वासां विनियोगस्य स्पष्टत्वात्पञ्चदशानामृचां समुच्चयेन सामिधेनीत्वं । याज्यानुवाक्यार्थत्वेन चतसृणामेवापेक्षितत्वेऽप्यवशिष्टानां विकल्पेन विनियोग इति प्राप्ते क्वचित्सर्वोपदेशः क्वचिदेकदेशोपदेश इति विधिवैरूप्यस्यायुक्तत्वात्प्रथमोत्तमावृत्त्यैव सामिधेनीषु पञ्चदशत्वसिद्धेरेकादशर्चश्चतस्रश्चेत्येवं विभज्य विनियोगः ॥

## सू० य इन्द्रिय ॥ ४ ॥

सर्वपृष्ठायां व्यत्यासमन्वाहेत्यादिना देवताभिर्व्यतिषजतीत्यन्तेन द्वयोर्द्वयोर्ऋचोरन्योन्यं व्यतिषङ्गं विधायेन्द्राय रथन्तरायानुब्रूहीति रथन्तरस्यर्चमनूच्य बृहत ऋचा यजेदिन्द्राय बार्हतायानुब्रूहीति बृहत ऋचमनूच्य रथन्तरस्यर्चा यजेदित्यादिना मध्ये विवृतं । तत्रैव न बृहत्या वषट् कुर्यादित्यपि प्रतिषिद्धं । तत्र बृहतीशब्दस्य द्रव्यवचनत्वेन त्रिष्टुप्सं याज्याधिकरणन्यायेन बृहद्रथन्तरयोरेवोपस्थितत्वेन तयोर्याज्यात्वप्रतिषेधाद्विकल्प इति प्राप्तेऽक्षरसङ्ख्यावच्छेदकधर्मविशेषस्य बृहतीपदवाच्यतया तस्यैव प्रदानकरणतावच्छेदकत्वप्रतिषेधोऽयमनुवाक्यान्तिमाक्षरचतुष्टयस्य याज्यायामध्यूहनविधेरर्थवादमात्रम् । अनुष्टुभं च ह वा एतां सम्पादयतीतिवत् । तथा चाभित्वाशूरेत्यारभ्येशानमित्यन्तमनुष्टुभमनूच्य इसुस्युपस्त्वामिद्धि हवामह इति पङ्क्त्या यजेत् । एवं त्वामिद्धीत्यारभ्य त्वाङ्काष्ठेत्यन्तमनुष्टुभमनूच्य स्ववंतो भित्वाशूरनोनुम इति पङ्क्त्या यजेदित्यर्थः ॥

## सू० द्वे याज्ये ॥ ५ ॥

महापितृयज्ञे तिस्र ऋचो याज्यानुवाक्यात्वेनाम्नाताः । तासु द्वयोर्ऋचोः समुच्चित्य याज्यात्वं । द्वे वै देवानां याज्यानुवाक्ये इति प्रकृत्य परे हि देवेभ्यः पितर इति श्रुत्या देवापेक्षयाधिक्यकथनात् । आधिक्यं च प्रदानमन्त्रांश एव । तद्देषा तृतीयैतया वै प्रददातीति श्रुत्या विवरणात् । अनुवाक्यायाज्यात्वेन क्रमप्राप्तयोर्द्वयोर्विनियोगे तृतीयाया अवशिष्टायाः सन्निहितत्वेन याज्यायामेवोक्तलिङ्गेन समुच्चित्य विनियोगस्य न्याय्यत्वादिति प्राप्ते द्वे पुरोऽनुवाक्यात्वेनैव द्वे विनियोज्ये लिङ्गस्योभयसाधारणत्वात् । प्रथमया द्वितीयया गमयति प्रैवतृतीयया यच्छतीति स्पष्टमेव कौषीतके विनियोगाच्च ॥

## सू० उभे ॥ ६ ॥

अग्नीषोमयोर्देवतात्ववदुभयोः पुरोऽनुवाक्यात्वस्य व्यासज्यवृत्तितयान्ते निधीयमानः प्रणवो द्वितीयर्चान्त एव स्यादिति प्राप्ते पुरोऽनुवाक्ये इति द्विवचनेन प्रत्येकपर्याप्तत्वावधारणात्प्रतिपुरोऽनुवाक्यं प्रणवो निधेयः । एतेन ऋचमुक्त्वा प्रणौत्यपरामुक्त्वा प्रणौतीति श्रुतिरुपपद्यते ॥

## सू० गृहमेधीये ॥ ७ ॥

न सामिधेनीरन्वाहेति गृहमेधीये सामिधेनी निषेधादावाहनमपि न कार्यम् । कौषीतके आवाहनविधिभ्यः परतोऽथ यत्परस्तात्सामिधेनीनां जपति वज्रो वै सामिधेन्य इति सामिधेनीपरामर्शेन तदवान्तरप्रकरणे पाठेन तदङ्गत्वावगतेरिति प्राप्ते उभयोर्भिन्नकार्यार्थत्वेन गुणानां च परार्थत्वादिति न्यायेन परस्पराङ्गाङ्गिभावे मानाभावात्परस्ताज्जपविधेर्दूरस्थानुवादेनाप्युपपत्तावावान्तरप्रकरणाभावान्नावाहनबाधः ॥

## सू० वाजिनाम् ॥ ८ ॥

वैश्वदेवे पर्वणि वाजिनेज्यादेवतानां वाजिनामप्यावाहनकाले स्विष्टकृदादिदेवतानामिवाहनं कर्त्तव्यमिति प्राप्ते परप्रयुक्तद्रव्योपजीवित्वाद्द्रव्यस्य चावाहनकाले जनिष्यमाणत्वेनानिश्चितत्वाद्विष्णोरुरुक्रमस्येव नावाहनम् । अत एव सवै वाजिनो नावाहयतीति लिङ्गम् ।

## सू० कालपृथक्त्वात् ॥ ९ ॥

एतामिष्टिं निरवपदग्नये भ्राजस्वते पुरोडाशमष्टाकपालं सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालमिति विहितायां चक्षुष्कामेष्टावग्निं भ्राजस्वतमावहेत्यावाहनं तन्त्रेण स्यात् । सम्प्रतिपन्नदेवताकत्वेन प्रदानस्यापि तन्त्रेण सम्भवादिति प्राप्ते सौर्यपूर्वोत्तरत्वरूपकालभेदस्य विवक्षिततया तन्त्रेण प्रदाने तदन्यतरबाधापत्तेः । पार्थक्येनैव प्रदानादि । दधिपयसोस्तु सौविष्टकृताग्नेयपूर्वोत्तरत्वयोरबाधात्तन्त्रतोपपत्तिः ।

अद्यावधि कृतिरेषाऽद्यन्तविहीनेति दीपिकाख्याऽऽसीत् ।
षोडशकलाभिरधुना परिपूर्णा भाट्टचन्द्रिकात्वमगात् ॥ ३ ॥

आसीत् षोडशलक्षणी श्रुतिपदा या धर्ममीमांसिका ।
संकर्षाख्यचतुर्थभागविधुरा कालेन साऽजायत ॥
गायत्री त्रिपदात्मिकेव विबुधैरद्यापि पापठ्यते ।
तां पूर्णामतनोत्क्रमेण महता गम्भीरजो भास्करः ॥ ४ ॥

इति श्रीसंकर्षे भाट्टदीपिकायां षोडशस्याऽध्यायस्य चतुर्थः पादः ॥ ४ ॥
षोडशोऽध्यायो ग्रन्थश्च समाप्तः । समाप्तं च पूर्वमीमांसाशास्त्रम् ॥

श्रीसम्बत् १९५०

शुद्धाषाढशुक्लद्वितीयाशनौ ।

